# ARCHÂVÂTARA VAIBHAVAM.

Prize Essay at the Ninth Conference of the
Sri Vaishnava Siddhanta Sabha

BY

**PANDIT, R. V. KRISHNAMACHARYA,**

*'Abhinava Bhatta Bana Sabda Tarkalankara Vidya Bhushana'*

*Government College, Kumbakonam*

PUBLISHED BY

Rao Bahadur, T. NAMBERUMAL CHETTY, M. L. C.
MADRAS.

Printed at the
SRI KRISHNA VILASA PRESS,
KUMBAKONAM.

1921. [*Annas 8.*

॥ श्री. ॥

# ॥ अर्चावतारवैभवम् ॥

केरल नरपाल श्रीमानविक्रमकविराज श्री सामूतिरि-

महाराजास्थान सहृदयसमागम सभा संमानित

“ अभिनवभट्टबाण शब्दतर्कालंकारविद्याभूषण ”

विरुदभाजा

कुम्भघोणस्थ राजकीयाङ्गलकलाशाला संस्कृताध्यापकेन

वात्स्यचक्रवर्तिना गयपेट्टै कृष्णमाचार्येण

विरचितं

---

दक्षिणभारत श्रीवैष्णवसिद्धान्तसभा नवमसंमेलन सामाजिक

पण्डितैः परीक्ष्य सपारितोषिकम् उत्तमत्वेन संभावितं

मद्रनगरस्थेन

ता. नम्पेरुमाळ श्रेष्ठिना

कुम्भघोणस्थ

श्रीकृष्णविलास मुद्रालये

मुद्रयित्वा प्रकाशितम् ।

---

मूल्यम् ]

१९२१.

॥ श्रीः ॥

इदं खल्वखिलानामप्यनुभवपुनरुक्तम् — यदुत एकतः क-
लिना अन्यतश्च कौतस्कुतैः कलुषिते जगति, आस्तिकानां श्रद्धापू-
र्णमपि मानसं हेतुवादेन किमपि किमपि विपर्यस्यतीति । सति चैवं
स्वयमेव हैतुकानामनात्मज्ञानां सर्वतोऽपि युक्तिवादाः समुन्मिष-
न्तीति नैतद्विस्मयाय लोकतन्त्रज्ञानाम् ॥

तादृशानां च हेतुवादानां निरासः प्रतिवादाश्च आस्तिकैरा-
वश्यं भावनीया इत्यतिमहानयं भारस्तेष्वायतते । आस्तिक्यगन्धस्या-
प्यविषये च हेतुवादरतानां सदसि श्रद्धाधनानां समाज इव केवलं
प्रमाणवचनमात्रोपन्यासो न कमप्यर्थं फलति, प्रत्युत परिहासाय
च भवति । ते खलु श्रुतेः प्रभृति निखिलानामपि ग्रन्थानामवतार-
कालं हेतुभिरभ्यूह्य, तत्र तत्र प्रामाण्यमन्यथाभावं च निर्णीय प्रायेण
अप्रत्ययबहुला एव भवन्ति ॥

तत्र च प्रत्यवस्थातुकामैरास्तिकैरपि तत्प्रहतयैव पद्धत्या
संचरमाणैर्भाव्यमिति, तदानीमेव तेषां शिरांसि अवाङ्मुखानि
भविष्यन्तीत्यत्र च न स्तोकोऽपि संशयो विवेकिनाम् ॥

एवमाशयानैरेव सुदूरमस्माभिस्तदीयायां पद्धतौ प्रास्थीयत
उपाक्रम्यत च बलवदेव संरब्धुम् ॥

परिमितायुषो हि प्रायेण वयं संग्रहरुचयो भवामः । शायं समासव्यासधारणामिच्छन्तोऽपि स्युरिति विश्वसन्तः, कैश्चिदलसानां मन्दमतीनामुपकरिष्यन्तीति माशंसा एव वयं द्वितीयपरिच्छेदे किंचिदिव विस्तरमङ्गीकार्ष्म ॥

अनेन च कैङ्कर्येण सर्वाराधनविश्रान्तिभूमिर्भगवान् श्रियःपतिः प्रसीदतु ॥

परमैकान्तिपदपङ्कजरेणुः

रायंपेट्टै. कृष्णदासः.

## भूमिका ॥



पुरा किल अस्मत्पूर्वतनाः आर्याः लोकानाम् ऐहिकामुष्मिकश्रेयःप्रतिपादकानि बहूनि शास्त्राणि आकलय्य अस्माकं चक्षुः उन्मीलयामासुः । बहुतिथेन कालेन स्वानुभवं प्रमाणीकुर्वन्तः ते ऐहिकामुष्मिकयोः मध्ये क्षणभङ्गुरं दुःखसंमिश्रम् ऐहिकम् अपेक्ष्य शाश्वतम् अदुःखसंमिश्रम् आमुष्मिकमेव श्रेयः सर्वोत्कृष्टम् इति उद्घोषयामासुः—

'आरोग्यमिन्द्रियौन्नत्यमैश्वर्यं शत्रुशालिता ।
वियोगो बान्धवैरायुः किं तथैनात्र तुष्यति ॥' इति ।

निर्णीतं च भगवता पाराशर्येण —

'आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥' इति ।

तादृशं च श्रेयः, सर्वेश्वरस्य भगवतः समाराधनं विना न शक्यते प्राप्तुमिति सर्वेषां शारीरकशास्त्रतत्त्वम् । स च परमपुरुषः परव्यूहविभवहार्दार्चा[illegible]नि पञ्चात्मना अवतिष्ठते इति पञ्चधा पञ्चात्मा इत्यादिश्रुतयः तदुपबृंहणरूपाः स्मृतयश्च विसंवादरहितं प्रतिपादयन्ति । तेषु पञ्चसु रूपेषु मध्ये पञ्चमम् अर्चारूपमेव पण्डितपामरसाधारण्येन सर्वेषां हृदयंगम

अहिर्बुध्न्यशौनकादयः महर्षयः तदेव अर्चारूपम् बहुधा प्रशंसन्ति
एवंविधा इयम् अर्चा न केवलं आमुष्मिकं किं तु ऐहिकमपि फलं
आराधकजनाभीप्सितं प्रयच्छति इति श्रीपाञ्चरात्राद्यागमेषु प्रति
द्यते । दृश्यन्ते च इदानीमपि तत्र तत्र देवालयेषु राजराष्ट्रसमृ
मुद्दिश्यैव क्रियमाणाः उत्सवाः पूजाविधयश्च । किं च पुरा भा
खण्डमिदम् अलंकृतवन्तः पुण्यशीलाः राजानः राष्ट्रसमृद्धिम् उ
द्दिश्यैव बहून् देवालयान् प्रतिष्ठापयामासुः इति शृणुमः ॥

एवं सर्वविधातिशययुक्तं सर्वसुलभं सर्वाभीप्सितसाधकं
अर्चाराधनम् इदानीन्तनाः केचन पण्डितंमन्याः आक्षिपन्ति ;
नितरां दूयते मे हृदयम् । अस्मिन् विषये प्रतिपक्षिभिः उद्भावित
आक्षेपान् समाधातुम् अवसरं प्रतीक्षमाणे मयि , दैवात् दक्षिण
शीयश्रीवैष्णवसिद्धान्तसभायाः नवमं संमेळनं पूर्वस्मिन् वत्स
संनिहितम् आसीत् । तदानीं सभाकार्यदर्शिनः अस्मिन् संमेळने
विदुषां गैर्वाणीलेखचातुरीं परीक्षितुं काचन संभावना परिक
नीयेति माम् अवबोधयामासुः । तदा [illegible] अर्चाराधनप्रामाण्यप्रतिपा
दनपुरस्सरम् अर्चावतारवैभवम् अधिकृत्य लिखितेषु लेखेषु स
उत्कृष्टत्वेन निर्णीतस्य संभावनां प्रदातुम् अभ्युपागमम् ॥

अथ समागतेषु [illegible] लेखेषु वाक्यरचनया विषयपरि
शीलनया च उत्कृष्टत्वेन सभया निर्णीतम् इमं लेखं आन
उत्साहवानपि अहं किञ्चिद्दूरमेव अनुवाचयितुं

अवसरम् अवापम् । ग्रन्थस्य अस्य शैलीपाकविषयविवेकादयः परिमितज्ञानमपि माम् आह्लादयन्ति । अस्य च कर्ता कुम्भघोणस्य राजकीयकलाशालासंस्कृताध्यापकः विद्वान् श्रीकृष्णमाचार्यः ग्रन्थस्य रचनासमये सुबहून् ग्रन्थान् परिशीलितवानिति विज्ञायते । तत्रापि प्रतिवादिभिः उद्भावितान् आक्षेपान् समाधातुं चतुर्ष्वपि वेदेषु समञ्जसानि प्रमाणानि उपलभ्य प्रदर्शयामासेति इदं नितरां हर्षस्थानम् । किञ्च विग्रहाराधनस्य अर्वाचीनत्वं खण्डयितुं प्रवृत्तोऽयं ग्रन्थकर्ता श्रुतिस्मृतीतिहासपुराणादिग्रन्थानां पौर्वापर्यनिर्णयविषये सुबहु परिश्रान्तवानिति अमायम् आशयं प्रकाशयामि ॥

ग्रन्थोऽयम् आस्तिकानां सुबहु उपकरिष्यतीति . समुद्राप्यास्य प्रकाशनम् अत्यावश्यकमिति बहुभिः आस्तिकमहाशयैः अवबोधितोऽहं ग्रन्थस्यास्य मुद्रापणे प्रवृत्तोऽभवम् ॥

ग्रन्थमिमम् अनुवाच्य ग्रन्थकर्तुः श्रीवैष्णवसिद्धान्तसभायाः . मम च प्रवृत्तिः चरितार्थीकर्तव्येति सर्वान् सहृदयान् साञ्जलिबन्धं समभ्यर्थये ॥

इति
विदुषामनुचरः
ता. नम्पेरुमाळ् श्रेष्ठी.

## FOREWORD.

The Great Rishis, for the benefit of mankind, here and hereafter have prescribed several Sastras whereby they have opened our eyes to the wealth of literature there is concerning their welfare. From ages of recorded experience, they have come to the conclusion that of the two—here and hereafter– the life hereafter is a blessed one and far superior to the life here, which is full of pain and misery.

This truth they have promulgated in unmistakable terms. The great Vyasa demonstrated the utter unstable nature of the life here, in the following couplet :—

आरोग्यमिन्द्रियैर्लावण्यं ऐश्वर्यं शत्रुशालिता ।
विपोगो बान्धवैरायुः किन्तद्येनात्र तुष्यति ॥ इति ।

He came to the conclusion that the simplest way of attaining beatitude is meditation of Narayana, which he has conveyd to us in the following stanza :

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ॥ इति ।

To attain this eternal happiness, Vedanta Sutras enjoin that the worship of Sree Bhagavan is essential and that by such worship alone the object is attainable.

It is stated that there are five forms of worshipping Him, viz: *Para, Vyuha, Vibhava, Harda* and *Archa*. The authority for this is found in Taittiriya in which Bhagavan is stated to exist as "पञ्चधा पञ्चात्मा" and also in various Srutis, Smritis Itihasas and Puranas in uncontroversial terms. Further, the great Rishis of whom Ahirbuthnya and Sounaka stand fore-most, declare that amongst the five forms of worship mentioned above, Archa form the last is the simplest, easiest and the most certain way of securing the goal. Being so simple, it is within the reach of Pandits and Pamaras, the high and the low, the rich and the poor. The Rishis also aver that Archa worship, besides giving them happiness eternal, also gives the *Archa* worshippers the realisation of their earthly desires. To verify this statement one may refer to Agamas like Pancharathra.

These works are full of instances illustrating that for the benefit of mankind, and for the well-being of the king, temples have been established, daily worship prescribed, and feasts provided for on special occasions. Sthala Puranas relate stories of ancient rulers establishing temples and constructing tanks for the well-being of themselves and their subjects.

It is very regrettable that modern thinkers, in confidence of their wisdom, denounce *Archa* worship.

When so much has been said of its greatness, its simplicity, and its efficacy, in the various ancient works above mentioned, I began to think how such objections could be met and the erroneous impressions corrected. When the ninth Conference of Pandits organised by Sree Vaishnava Siddhanta Sabha took place last year, I learnt from the Secreitaries of the Conference that Pandits attending the Conference and submitting essays in Sanskrit would be awarded prizes I took advantage of this and offered one prize to the best essay on Archavathara Vaibhava. And the essay now before you has been selected as the best.

Though I have been anxious to study it carefully, I have for want of time, been able to go through only some portions of it: and with the limited knowledge I possess, I am able to say that the style and diction adopted by the writer are simple and charming. The author Sreeman Krishnamachariar is the Head Sanskrit Pandit of the Government College, Kumbakonam. It is evident from the essay that he has consulted numerous ancient works. Anticipating all possible objections, he meets them with authorities from the four Vedas. He then takes up the question whether *Archa* worship is modern or ancient and quotes authorities from Sruthis, Smrithis, Ithihasas and ranas to establish it, as decidedly very ancient.

I have therefore no hesitation in saying that the author has, in the production of this essay, employed vast study and severe scrutiny and displayed marked ability.

At the suggestion and encouragement of some of my friends who sincerely believe that the publishing of such a work will benefit the public, I have undertaken the publication of the essay. With folded hands, in humble posture and in all sincerity I offer my prayers to all Sree Vaishnavas and beg them to read this essay That would be a sufficient recompense to the author, the Sabha, and my humble self.

It will be ungrateful on my part if I do not acknowledge in writing the services rendered in this matter by Sreeman Pandit Anantha Chariar The idea was his, and all credit is due to him for having successfully carried it out. He has written the preface in Sanskrit for me. I have attempted its translation in English and, if the result is poor, I crave the indulgence of the readers for all the faults in my attempt.

**T. Namberumal Chetty.**

॥ श्रीः ॥

# ॥ अर्चावतारवैभवम् ॥



सौलभ्यमधिकं यस्यां पश्यन्ति कृतबुद्धयः ।
सैषा पञ्चात्मनो जीयादर्चा भगवतो हरेः ॥

शिष्टाचारचिरानुवृत्तिमहितं चित्तानुरक्तिप्रदं
श्रौतस्मार्तबहुप्रमाणघटितप्रामाण्यबन्धोज्ज्वलम् ।
अर्चाराधनमाक्षिपन्ति निजधीदोषेण ये पापिन-
स्तानेतांस्तृणवल्लघून्विधुनुमो दूरे कलेः किंकरान् ॥

इह खलु अनादिकर्मवासनानुगुणबुद्धिप्रवृत्तिभेदविचित्रेऽस्मिन्संसारे न किल तन्नाम न संभाव्यते—यदश्रुतचरमास्तिकैः, अदृष्टपूर्वमार्यचरितैः, वस्तुतोऽतत्त्वमपि तत्त्वमिव प्रतिभासमानं नवं नव किमपि किमपि सर्वतः समुन्मीलतीति। इदमपि तावदीदृशमेव—यदुत श्रुतिस्मृतिसदाचारादिप्रमाणप्रसिद्धमपि भगवदर्चाराधनम् आस्तिकाभासैः श्रद्धाकञ्चुकिभिर्नास्तिकैरर्धमुग्धैरन्यप्रत्ययनेयमतिभिराधुनिकैरनेकैरपह्नूयते ।

इमाः पुनस्तेषां वाचोयुक्तयः—"प्रतिमापूजनं तावदवैदिकम्, वेदकालादर्वाचीनं च। न खलु वेदेषु विग्रहाराधनमुपलभ्य-

ते; नापि तादृशानि वचनानि पश्यामः, यानि प्रतिमापूजनं व्यञ्जनयापि बोधयिष्यन्ति; न वा क्वचिद्देवालयः प्रस्तुतः, येन अन्यथानुपपत्त्या विम्बार्चनं कल्पयेम । वैदिकश्च काल इतो वर्षसहस्रत्रयात्प्राचीनः । वेदशब्देन च वयं मन्त्रभागानेव व्यपदिशामः, न पुनर्ब्राह्मणानि । प्रमाणं चास्माकं मन्त्रात्मको वेद एव । तत्रापि ऋक्संहिता तावदविवादं प्रमाणम् । बुद्धनिर्वाणादनन्तरं च तदन्तेवासिभिः संभूय समालोचयद्भिरिदंप्रथमतया का चन बुद्धस्य प्रतिमा पूजार्थं परिकल्पिता, समर्चिता च । तमेतमाचारमनुरुन्धानैरेव ब्राह्मणैरपि तद्वत्प्रतिमापूजनमुपचक्रमे । ततः पुरस्तात्तु आर्याणां वैदिकानां प्रतिमानिर्माणं देवायतनविरचनं च न विदितमासीत् । बुद्धनिर्वाणसमयश्च क्रैस्तवत्सरारम्भात्प्राक् सप्ताशीतिमधिका चतुःशती वत्सराणामिति चरित्रग्रन्थकर्तॄणां विमर्शः । अतस्तदनन्तरोत्पन्ना इतिहासाः पुराणानि पराणि च निबन्धनानि नांशतोऽप्यत्र प्रमाणपदवीमधिगन्तुमर्हन्ति । अपरिच्छिन्नस्य भगवतः प्रतिकृतिपरिच्छेदेन भावनं च न केवलं निःश्रेयसाय न भवति, अपि तर्हि चक्रवर्तिनो ग्रामैकाधिपत्यकल्पनमिव नितरामुपहासास्पदमश्रेयसेऽपि भविष्यति । अरूपतया अचक्षुःश्रोत्रभावेन अपाणिपादत्वेन च श्रूयमाणस्य भगवत आत्मानुमानेन नराकारकल्पनम्, तदुपजीवनेन प्रतिमापूजनं च न धीमतां हृदयाय रोचिष्यते । अत एवेदमप्रतिबुद्धानामेव विषयः । तथा च 'प्रतिमा-

स्वल्पबुद्धीनाम्' इति वचनमग्निपुराणे पठ्यते । वाजसनेयसंहितायाम् 'न तस्य प्रतिमा अस्ति' इति साक्षादेव श्रूयमाणो भगवतः प्रतिमानिषेधोऽप्येतदखिलमपि विषयजातमामूत्रयति । इत्थं च सांप्रतमाचर्यमाणमर्चाराधनमर्वाचीनमवैदिकमप्रबुद्धाधिकारिकं गड्डरिकाप्रवाहागतमिति विवेचनीयम्" इति ॥

अत्र ब्रूमः— यदुच्यते— वेदेषु नास्ति प्रतिमापूजनस्य गन्ध इति कृत्वा तदिदमवैदिकमर्वाचीनं चेति, अत्र तावदिदं पृष्टो भवानाचष्टाम्— अङ्ग कति वेदा भवता अधीताः? येषु भवान्नोपलभते प्रतिमापूजाम् । "अनन्ता वै वेदाः" इति हि वेदानामानन्त्यमाम्नायते । अत एव खलु खिला नाम श्रुतयः प्रामाणिकैरद्य यावदभ्युपेयन्ते । सति चैवं परिमितायुषामल्पमतीनां भवादृशामुपलम्भसरणिं नायमवतीर्णो विषय इत्येतावता विग्रहाराधनस्यावैदिकत्वोपालम्भः केवलं साहसमात्रमेव । यदि नोपलभ्यते, तर्हि उपलब्धौ यत्नः क्रियताम् । महान् हि वेदानां शाखाभेदः । "चत्वारो वेदाः साङ्गाः सरहस्या बहुधा विभिन्नाः । एकशतमध्वर्युशाखाः । सहस्रवर्त्मा सामवेदः । एकविंशतिधा बाह्वृच्यम् । नवधाथर्वणो वेदः" इति पस्पशायां पतञ्जलिः । अथ सम्प्रति समुपलभ्यमानेषु ऋक्संहितादिषु विग्रहाराधनविषयमनुपलभमाना एव वयं तस्यावैदिकत्वमाचक्ष्महे इति चेत्, हन्त निखिलमप्यात्मानुमानेन निध्यायद्भिः स्वयं नष्टैरेव परानपि ना-

शयितुं प्रवृत्तैः पण्डितमानिभिः कतिपयैः प्रच्छन्नकैस्तवैः सर्वात्मना विप्रलब्धोऽसि । अस्ति वा वैदिकं प्रमाणं तत्र ? इति जिज्ञासया सुहृद्भावेन पृच्छाम इति चेत्, अवहितमनाः शृणु—त्वयैव निर्विवादप्रमाणत्वेन निश्चितायाम ऋक्संहितायाम् "[1]प्रवः पान्तमन्धसो धिया यते महे शूराय विष्णवे चार्चत । या सानुनि पर्वतानामदाभ्या महस्तस्थतुरर्वतेव साधुना" इति ऋक् पठ्यते। अस्याश्चायमर्थः— हे उपासकाः, वः = युष्माकम्, अन्धसः = अन्नम्, पान्तम् = रक्षन्तम्, निवेदितान्नकटाक्षणमेवात्र रक्षणम, (अर्चावतारम्) धिया = स्वसंकल्पेन, आयते = आगत्य प्राप्नुवते, "बिम्बाकृत्यात्मना बिम्बे समागत्यावतिष्ठते" इत्युक्तरीत्या तत्र अवतिष्ठमानायेत्यर्थः । महे = महते, शूराय = निरतिशयशौर्ययुक्ताय, विष्णवे = सर्वव्यापकाय नारायणाय, नारायणं प्रसादयितुमित्यर्थः, प्रार्चत च = तुलसीपुष्पादिकं तस्य पादारविन्दयुगले सभक्ति न्यस्यत च । चकारेण स्तुतिवन्दनादीनि गृह्यन्ते । पान्तम् = रक्षत, अन्धसः = अन्ननिमित्तमिति कश्चित्। धियायते = 'ये यथा मां प्रपद्यन्ते—' इत्युक्तरीत्या ध्यातुरभिमतं रूपं परिगृह्य उपतिष्ठमानायेत्यर्थ इति केचित् । धियायते = ध्यायमानायेत्यर्थ इति कश्चित् । श्रीसुन्दरराजभट्टाचार्यस्तु— 'अन्धसः = अज्ञानात्, वः = युष्मान, प्रपान्तम् = प्रकर्षेण रक्ष-

1. ऋक्संहिता—1 - 155 - 1

न्तम , धियायते = धीवदाचरन्तमित्यर्थः । विभक्तिव्यत्ययश्छान्दसः । महेशूराय = महाशूरम् , विष्णवे = विष्णुम् , अर्चत च, चकारात् ध्यानस्तुतिवन्दनादीनि समुच्चीयन्ते ।" इति व्याख्यन् । अत्र चार्चनशब्देन तुलसीदलाद्युपहार एव विवक्षितः , न पुनः केवला स्तुतिः । अर्चनं हि स्तुतेर्विभिद्यते । एतेन 'अर्चत प्रार्चत—' इति श्रुतौ अर्चतिः स्तुतिवाचीति नेयं विग्रहाराधनं गमयितुं शक्नोतीति वदन्तोऽपि प्रत्युक्ताः । अदाभ्या = परैरनभिभाव्या , महः = महती , या = विष्णुरूपा देवता, साधुना = समीचीनेन , वेगवतेत्यर्थः , अर्वता इव = अश्वेनेव , पर्वतानां सानुनि = पर्वतानां समुच्छ्रितप्रदेशे , तस्थतुः = तस्थौ । अभिमतप्रदेशप्रापणसमर्थेन अश्वेन यथा अत्युच्छ्रितं प्रदेशमारोहति , तद्वत् उच्चं पदमारूढेति भावः । अत्र वचनादिव्यत्ययश्छान्दसः । यद्यपीयम् ऋक् सायणाचार्येणान्यथैव व्याख्यायते, तथापि शौनकेन महर्षिणा अस्य मन्त्रस्य विष्ण्वर्चाराधने विनियोगकथनात् एवमेव व्याख्या साधीयसी , अथवा एतदनुसारीणि व्याख्यान्तराणि । तथा च शौनकः— "शौनकोऽहं प्रवक्ष्यामि नित्यं विष्ण्वर्चनं परम् । प्र वः पान्तमन्धसोधि इत्यर्धर्चविधानतः" इति । मन्त्रतात्पर्यं हि मन्त्रद्रष्टार ऋषय एव जानन्ति । अत्रैव सूक्ते— "[1]प्र विष्णवे शूषमेतु मन्म गिरिक्षिते उरुगायाय वृष्णे" इति ,

1. ऋक्संहिता—1 - 155 - 2.

“ [1]प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः” इति च ऋचौ बिम्बाराधनमेव कटाक्षयतः । “ [2]अरायि काणे विकटे गिरिं गच्छ सदान्वे । शिरिंबिठस्य सत्त्वभिस्तेभिष्ट्वा चातयामसि” इति श्रूयमाणो मन्त्रः श्रीमन्त श्रीवेङ्कटाद्रीश्वर स्तौतीति महतां विमर्शः । इदमत्र तत्त्वम्—अस्मत्पूर्वमहत्तराः किल भगवन्तमादितस्तावत् महत्सु शैलप्रदेशेष्वेव प्रतिष्ठापयामासुः । अत एव सांप्रतमपि प्रसिद्धानि देवायतनानि दक्षिणत उत्तरतश्च शैलाग्रेष्वेव समुपलभ्यन्ते । अतश्च बिम्बाराधनगोचरेषु मन्त्रेषु बहुषु प्रायेण पर्वतगिर्यादीनि पदानि संलक्ष्यन्ते । “ [3]गिरिपृष्ठे तु सा तस्मिन् स्थिता स्वसितलोचना । विभ्राजमाना शुशुभे प्रतिमेव हिरण्मयी ” इति भारतपद्यमपि एनमर्थमासूत्रयति । इत्थं च देवालयप्रस्तावो वेदेषु नास्तीत्युक्तिरपि प्रत्युक्ता । वस्तुतस्तु सर्वोऽप्ययं विचारो यक्षानुरूपबलिन्यायेन पूर्वपक्ष्यभिमतं वेदपौरुषेयत्वमङ्गीकृत्य प्रवर्तत इति न मात्रयाप्यत्र विमनायितव्यमास्तिकैरार्यैः ॥

किंच पाश्चात्त्यविद्यासंस्कृतेष्वपि बहवो विग्रहाराधनं वैदिकमिति निश्चिन्वन्ति; कतिपये तु संशेरते ; न खलु माक्समुल्लरमेक्डानलादिवत्सर्वेऽप्यैककण्ठ्येन प्रतिमापूजनं प्रतिषेधन्ति । तथा

1. ऋक्संहिता—1 - 155 - 4
2. ,, —10 - 155 - 1
3. 1 - 187 - 27 Kumbakonam Edition

हि—वालन्सेनो नाम कश्चन विमर्शकः, देवतानाम् ' दिवो नराः' इति व्यपदेश इति विलिख्य, "[1]सप्त होत्राणि मनसा वृणाना इन्वन्तो विश्वं प्रतियन्नृतेन । नृपेशसो विदथेषु प्रजाता अभीमं यज्ञं विचरन्त पूर्वीः" इति ऋक्संहितामन्त्रमपि प्रमाणतया प्रदर्श्य, मूर्तिपूजां वैदिकीं मनुते*। "नृपेशसः = नररूपाः, विग्रहवत्यो यज्ञद्वाराभिमानिदेवताः" इति भाष्यकारः । "[2]ता यज्ञेषु प्र शंसतेन्द्राग्नी शुम्भता नरः । ता गायत्रेषु गायत" इति ऋचम्, "शुम्भता = नानाविधैरलङ्कारैः शोभितौ कुरुत" इति तद्भाष्यं च विमृशन्विमर्शनिपुणो वेङ्कटेश्वरार्यो विग्रहाराधनं वैदिकमिति विलिखति । मानियर् विल्यंस महाशयः स्वकीये [4]भारतमतविचारनाम्नि ग्रन्थे "[5]बिभ्रद्द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम् । परिस्पशो निषेदिरे" इति मन्त्रं विग्रहाराधनपरं संशेते । "हिरण्ययम् = सुवर्णमयम्, द्रापिम् = कवचम्, बिभ्रत् = धारयन्, वरुणः, निर्णिजम् = पुष्टं स्वशरीरम्, वस्त = आच्छादयति ।"

1. ऋक्संहिता—3-4-5
* Journal of the Germ-orient Soc. XXII 587 F.f.
2. ऋक्संहिता—1-21-2,
3 Journal of Rayal Asiatic Society 1917
4 Religeous Thought and Life in India P. 1
5. ऋक्संहिता—1-25-13

इति तत्र सायणः । "[1]स्थिरेभिरङ्गैः पुरुरूप उग्रो बभ्रुः शुक्रेभिः पिपेशे हिरण्यैः" इति मन्त्रस्य भाष्यकृता कृतम् "स्थिरेभिः = स्थिरैः दृढैः, अङ्गैः = अवयवैः, (युक्तः) पुरुरूपः = अष्टमूर्त्यात्मकैर्बहुभी रूपैरुपेतः,.. शुक्रेभिः = दीप्तैः, हिरण्यैः = हिरण्मयैः हितरमणीयैर्वा अलङ्कारैः, पिपिशे = दीप्यते" इति विवरणमनुमोदमान इव स एव महाशयः स्वकीये तस्मिन्नेव ग्रन्थे मूर्तिपूजनस्य वैदिकत्वं संदिहान इव विलिखति । अन्योऽपि कश्चिद्विमर्शकः "[2]इदा रुद्राय तवसे कपर्दिने–" इति, "[3]दिवो वराहमरुषं कपर्दिनम्–" इति, "[4]त्रियम्बकं यजामहे––"- इति च मन्त्रान विग्रहाराधनसूचकान पश्यति । अपरोऽपि कश्चन विमर्शकः "[5]अर्हन् बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपम् । अर्हन्निदं दयसे विश्वमभ्वं न वा ओजीयो रुद्र त्वदस्ति" इति ऋचं विग्रहपूजासाधिकामालोचयति । "हे रुद्र, त्वम्, अर्हन् = योग्य एव सन, सायकानि = शरान्, धन्व = धनुश्च, बिभर्षि = धारयसि । तथा, अर्हन्नेव, यजतम् = यजनीयं पूजनीयम्, विश्वरूपम् = बहुविधरूपयुक्तम्, निष्कम् = हारम्, बि-

---

1. ऋक्संहिता—2 – 33 – 9.
2. „ —1 – 114 – 1
3. „ —1 – 114 – 5.
4. „ —7 – 59 – 12
5. „ —2 – 33 – 10.

भर्षि, तथा, अर्हन्नेव, इदम्, विश्वम् = सर्वम्, अभ्वम् = महन्नामैतत् अतिविस्तृतं जगत्, दयसे = रक्षसि। हे रुद्र, त्वत् = त्वत्तोऽन्यत् किंचित्, ओजीयः = ओजस्वितरं बलवत्तरम्, न वा अस्ति = न खलु विद्यते" इति तत्र भाष्यकारः ॥

अपि च "[1]अदो यद्दारु प्लवते सिन्धोः पारे अपौरुषम्। तदारभस्व दुर्हणो तेन गच्छ परस्तरम्।" इति काचन श्रूयते ऋक्। "अदः = विप्रकृष्टदेशे वर्तमानम्, अपौरुषम् = निर्मात्रा पुरुषेण रहितम्, यत् दारु = दारुमयं पुरुषोत्तमाख्यं देवताशरीरम्, सिन्धोः पारे = समुद्रतीरे, प्लवते = जलस्योपरि वर्तते" इति सायणस्य प्राथमिकं व्याख्यानम्। इदं च विग्रहाराधने देवायतने च सुदृढं प्रमाणं भवतीति, मन्ये, नूनमपरिणतप्रज्ञोऽपि ज्ञास्यति ॥

अथात्र स्यात्— पुरुषोत्तमक्षेत्रं हि बहोश्चिरादर्वाचीनेन केनापि नरपतिना विरचितमिति शिलाशासनेन विज्ञायते। तत्कथमयं विषयः संहिताधिरूढिमर्हतीति।

न स्यात्— यावता शिलाशासनं तदुल्लिखित इत्यूह्यमानः समयश्च बहुत्र विसंवदति। सन्ति चात्र सुबहूनि निदर्शनानि। विस्तरभयेन च प्रकृतानुपयोगीनि तत्र विरम्यतेऽस्माभिः। स चात्र

---

1. ऋक्संहिता—10-155-3.

नैसर्गिकः प्रसरन्केन वारितः प्रमादः, येन वयमत्र प्रत्ययमाबध्नी-मः। अति हि नाम पुरातनमेव तद्देवायतनं शिलाशासनप्रकाशि-तेन राज्ञा जीर्णमुद्धृतं स्यात्, अथ वा नवनवभागयोजनेन विस्तृतं भवेदिति संभावनायां न वयं बलवन्तमुपरोधमुत्पश्यामः॥

ऋक्संहितायां च अष्टमे मण्डले—"[1]सुदेवो असि वरुण यस्य ते सप्त सिन्धवः। अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव॥" इति मन्त्र आम्नायते। इदं च वचनं व्याकरणानुकूल्येन व्याचक्षा-णो भगवान् पतञ्जलिः "तद्यथा—शोभनामूर्मि सुषिरामग्निरन्तः प्रविश्य दहति" इति व्याख्यत्। "यथा सच्छिद्रां लोहमयीं प्र-तिमां प्रविश्याग्निः प्रकाशते तथेति दृष्टान्तः। अग्निर्हि तत्रत्यं मलं भस्मीकृत्य प्रतिमां शुद्धां करोति तथा विभक्तयोऽपि शारीरं पाप-मपाकुर्वन्तीति भावः। सूर्मी स्थूणायःप्रतिमेत्यमरः। स्मर्यते च 'सूर्मीं ज्वलन्तीमालिङ्गेन्मृत्यवे गुरुतल्पगः' इति" इति भाष्यमुक्त-पूर्वं व्याचक्षते। इयं च ऋक् प्रतिमायाः सत्तां वैदिकेऽपि काले प्रदर्शयन्ती बिम्बाराधनेऽपि प्रमाणीभवितुं पर्याप्नोतीति विमर्शकाः केचिद्विश्वसन्ति। एवम् "[2]कासीत्प्रमा प्रतिमा किं निदानमाज्यं किमासीत्परिधिः क आसीत्। छन्दः किमासीत्प्रउगं किमुक्थं यद्देवा देवमयजन्त विश्वे" इति दशमसण्डलान्तर्गता ऋगप्यत्र प्रमाणमिति केचित्॥

---

1. ऋक्संहिता—8-69-12.    2 ऋक्संहिता 10-11-3.

यजुषि च— "[1]प्र तद्विष्णुः स्तवते वीर्याय मृगो न भीमः कुचरो गिरिष्ठाः" इति श्रुतिरत्र प्रमाणं भवितुमर्हति । "यजुर्वेदे— '[2]यतो वीरः । कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः' इति, 'पिशङ्गरूपः सुभरो वयोधाः श्रुष्टी वीरो जायते देवकामः' इति, पारमार्थिकोपनिषदि 'रायां पतत्रे रयिमादधात्रे रायो बृहन्तं रयिमत्सु पुष्टाम् । राराजिमन्तं रतये यजन्तु तं बिम्बवन्तं ककुदाय भद्रे' इत्यादिश्रुत्या भगवतः शिलादिविग्रहरूपत्वम्, तस्यैवाराधनयोग्यत्वं च प्रतिपाद्यते" इति लक्ष्मीविशिष्टाद्वैतभाष्यकारः । "यतो वीर इति । यतः = जगद्रक्षणार्थम्, वीरः = विष्णुः 'विष्णोर्नु कं वीर्याणि प्रवोचम्' इति श्रुत्या विष्णोर्वीर्यवत्ताप्रतिपादनात्, कर्मण्यः = पाद्याद्युपचारैराराधनार्हः, सुदक्षः = सुतरां भक्ताभीष्टदानसमर्थः, देवकामः = क्रीडाकामः, युक्तग्रावा = शैलप्रतिमारूपी, जायते । ग्रावग्रहणं स्वर्णादीनामप्युपलक्षणम् । पिशङ्गरूपः = स्वर्णवर्णः, सुभरः = सुखेन भर्तुं शक्यः, वयसा गरुडेन धीयत इति वयोधाः, श्रुष्टी — 'श्रुष्टी च बलवान् बली' इति वैजयन्ती। रायां धनानां पतने त्रायत इति पतत्रे, रयिम् = धनम्, रयिमत्सु = धनवत्सु, पुष्टाम् = वर्धिताम्, आदधात्रे = कर्त्रे, ककुदाय = श्रेष्ठाय, भद्रे

---

1. शाखा — 2 – 4 – 24
2. तैत्तिरीयसंहिता— 3 – 1 – 36.

= भद्राय, छान्दसं रूपम् । इदं हविरिति शेषः । रायः = धनात्, बृहन्तम् = जगत्सु पूर्णम्, रारा‌जिमन्तम् = धनसमूहवन्तम्, रतये = जगद्विनोदाय पूजाग्रहणरतये, बिम्बवन्तम = प्रतिमास्वरूपिणम्, तं देवम्, यजन्तु = पूजयन्तु" इति तद्व्याख्याता॥

किंच, "भवा मित्रो न शेव्यो घृतासुतिः
विभूतद्युम्न एवया उ स प्रथः ।
अधा ते विष्णो विदुषा चिदृध्यः
स्तोमो यज्ञस्य राध्यो हविष्मतः ॥
यः पूर्व्याय वेधसे नवीयसे
सुमज्जानये विष्णवे ददाशति ।
यो जातमस्य महतो महि ब्रवात्
सेदुः श्रवोभिर्युज्यं चिदभ्यसत् ॥
तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य
गर्भं हविषा पिपर्तन ।
आस्य जानन्तो नाम चिद्विवक्तन
बृहत्ते विष्णो सुमतिं भजामहे ॥"

इति तैत्तिरीयब्राह्मणस्थास्तिस्रोऽपि ऋचः प्रतिमापूजने प्रमाणमिति स्मृतिरत्नाकरकारः । अत्र सायणभाष्यं प्रदर्शनीयमपि विस्तरभयान्न प्रदर्श्यते ॥

सामवेदीये चाद्भुतब्राह्मणे— "स परं दिवमन्वावर्तते। अथ यदास्यायुक्तानि प्रवर्तन्ते देवतायतनानि कम्पन्ते दैवतप्रतिमा रुदन्ति नृत्यन्ति स्फुटन्ति स्विद्यन्ति उन्मीलन्ति निमीलन्ति —" इत्येवं देवायतनानि दैवतप्रतिमाः, तासां चेष्टाश्च वर्ण्यन्ते। एवं स्फुटमेव ब्राह्मणे कण्ठोक्तौ सत्यां को ह्यनुन्मत्तः सचेतनः प्रतिमा-पूजनस्य अवैदिकत्वमाचक्षीत ?॥

अत्राह— ननु चोक्तं ब्राह्मणभागस्य वेदत्वं न वयं मृष्याम इति। सत्यम् आह भवान्। इदं तु पृच्छामः— किमियमिष्टिर्भ-वतः, उत प्रमाणानुरोधः ? आद्ये तु कल्पे नास्माकं प्रतिवचन-भारः। परस्मिंश्च पक्षे "मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति सूत्र-यन् आपस्तम्बः, मन्त्रमात्रेष्टप्रवृत्तिकेषु "मन्त्रे सोमाश्वेन्द्रियवि-श्वदेव्यस्य मतौ" इत्यादिषु सूत्रेषु मन्त्रपदं ब्राह्मणमात्रेष्टप्रवृत्ति-केषु "द्वितीया ब्राह्मणे" इत्यादिकेषु सूत्रेषु ब्राह्मणपदम् उभयेष्ट-प्रवृत्तिकेषु "तृतीया च होश्छन्दसि" इत्यादिकेषु सूत्रेषु वेदपर्यायं छन्दःपदं च प्रयुञ्जानो भगवान्पाणिनिश्च नूनं प्रत्यवस्थास्येते। एतेन ब्राह्मणभागस्य प्रामाण्यमपलपन्तोऽपि परास्ताः। "वेदोऽखिलो धर्ममूलम् —" इति, "धर्मज्ञसमयः प्रमाणम्, वेदाश्च" इति च मनुरापस्तम्बश्च धर्मप्रमाणं परिगणयतः॥

अथर्वणि च तृतीयकाण्डे द्वितीयानुवाके पञ्चमसूक्ते "सं-वत्सरस्य प्रतिमां यां त्वा रात्र्युपास्महे। सा न आयुष्मतीं प्रजां

रायस्पोषेण संसृज" इति तृतीया ऋक् पठ्यते। "राज्ञो रात्रौ आरात्रिकविधाने 'यां देवाः प्रतिनन्दन्ति' इत्येषा रात्रिदेवतावाहने विनियुक्ता। 'संवत्सरस्य प्रतिमाम्' इत्येषा च पिष्टमय्या रात्रेरुपवेशने विनियुक्ता। तदुक्तं परिशिष्टे — अथातः पिष्टरात्र्याः कल्पं व्याख्यास्यामः — इति प्रक्रम्य 'यां देवाः प्रतिनन्दन्ति' इति रात्रिमावाहयेत्। 'संवत्सरस्य प्रतिमाम्' इति पिष्टमयीं प्रतिकृतिं कृत्वा उदङ्मुखीमुपवेशयेत्" इति तत्र भाष्यकारः सायणः। इमे च ऋचौ यजुष्यपि किंचिद्भेदेन श्रूयेते॥ *

इदमत्र बोध्यम् — "वेदेष्वयमथर्वा पश्चात्तनोऽपि इतो वत्सरसहस्रत्रयात्प्राचीन एव। अयं च वेदस्तादात्विकस्य लोकस्य विशिष्य प्राकृतजनस्य स्वरूपस्वभावाचारादिकं सुविशदं प्रदर्शयति। विषयविचारणायां गृह्यसूत्रावतारस्यायमेव वेदो मार्गप्रदर्शक इत्युक्तिर्न खल्वसांप्रतम्" इति वीबरमाक्समुल्लरमेग्डानलप्रभृतयो विमर्शकाः पाश्चात्त्यपण्डिता एव विलिखन्ति। तादृशे चास्मिन् अथर्ववेदे देवताप्रतिमाया आवाहनोपवेशनादिकं कण्ठत एवाभिहितमिति जितं विग्रहाराधनस्य वैदिकत्वमभिदधानैरास्तिकैः। प्रतिमाद्रव्यं च पिष्टं वा भवतु मृच्छिलादिकं वेत्यन्यदेतदिति। इतोऽपि श्रुत्यन्तराणि अर्चावतारवैभवनिरूपणावसरे प्रदर्शयिष्यामः॥

---

* "यां जनाः प्रतिनन्दन्ति—" इति मन्त्रप्रश्ने। "संवत्सरस्य... रात्र्युपासते—" इति संहितायाम्—5-7-1.

यदपि—वेदस्य काल इतः संवत्सरसहस्रत्रयात्प्राचीन इति वेदानां पौरुषेयत्वमादिमत्त्वं च कल्पयन्ति ; तदपि कर्षकप्रायप्रकृतिभजनासक्तपुरातनार्यगीतत्वम् ऋचामभ्युपगम्य तदुपरि किमपि किमपि कल्पयतां स्वैरं सुदूरमूहमानानां केषां चन विमर्शकंमन्यानां स्वगोष्ठीमात्रसंकेतः । वयं तु—"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति, "यज्ञेन वाचः पदवीयमायन् । तामन्वविन्दन्नृषिषु प्रविष्टाम्" इति, "अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः" इति, "युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा" इति, "अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् । दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्" इति च वह्वीः श्रुतिस्मृतीः पराणि च प्रमाणान्यनेकानि जैमिनिसूत्राणि च परिशीलयन्तः, अनादिनिधनाविच्छिन्नसंप्रदायागतस्य वेदस्य अपौरुषेयत्वम् अकालकाल्यत्वं च प्रतिपाद्यामहे ॥

यदप्यभिहितमायुष्मता—'बुद्धनिर्वाणादनन्तरं बौद्धैः परिकल्पितां प्रतिमापूजामवलोकमानैरार्यैरप्यत्र पादः प्रसारित इति : अत्र सुदूरं पराक्रमितुमस्माभिर्दृढमयमाबद्धः परिकरः । इदं तावद्भवानादितश्चोदनीयः— बुद्धनिर्वाणादनन्तरं समवेतानां बुद्धशिष्याणां बुद्धप्रतिमानिर्माणतत्पूजनादिमतिः कथं नाम समुत्पन्ने-

ति; किमिदं प्रतिमापूजनमाचार्य एव तान्स्वयमुपदिदेश? आहो-
स्वित् तैरेव शिल्पशास्त्रात्प्रतिमानिर्माणादिकमधिजग्मे? न खलु
बुद्धमतानुसारिषु ग्रन्थेषु बुद्धः स्वप्रतिमापूजामुपादिशदिति समुट्ट-
ङ्कितं पश्यामः। शिल्पशास्त्रं तु सुदूरमर्वाचीनमिति भवत्सयूथ्या
उद्घुष्यन्तीति न द्वितीयः पक्षोऽपि भवतस्त्राणाय कल्पिष्यते।
यदि तपोबलं शरणीक्रियते, तर्हि सर्वात्मना भग्नो भवतो मनो-
रथः; यतस्तत्र वैदिका एव बौद्धानतिशेरते। यदृच्छापदान्तरितां
नियतिं प्रमाणयाम इति चेत्समुत्तिष्ठसे, तर्हि का नाम सा नि-
यतिः; या वैदिकानार्यानेकान्ततः परिहाय बौद्धानां परं पक्षे प-
तिष्यति, येन प्रतिमाराधनस्य बौद्धोपज्ञता वैदिकानां तदनुसारि-
ता च संपत्स्यते। "ब्रह्मचर्यमहिंसां चापरिग्रहं च सत्यं च यत्नेन
रक्षेत्" इति श्रुत एव अहिंसादिको धर्मः शाक्यस्मृत्युक्तत्वपुरस्का-
रेण समाचर्यमाणः स्वयमधर्म एव भविष्यतीति शिष्टाकोपाधिक-
रणे निर्णीय "शाक्योक्ताहिंसनं धर्मो न वा धर्मः श्रुतत्वतः। न
धर्मो नहि पूतं स्याद्गोक्षीरं श्वदृतौ धृतम्" इति शाक्यधर्माज्जुगु-
प्समानानार्यानेव बौद्धोपज्ञप्रतिमापूजनात्मकनव्याचारानुसारिणः
संगिरमाणो भवाननपत्रपमाणोऽपि, समाकर्णयतो यत्सत्यमस्मान
ह्रेपयति॥

ननु चार्यानप्याक्रामन्ती प्रतिबन्दी कथंकारं समाधास्यते?
इदमत्र समाधानम्—आर्याः किल सततपरिकलितश्रुतिपरिचया-

स्तत्र तत्र प्रतिपादितानि देवतानां रूपाणि भावयन्तस्तथैव प्रतिमाः प्रतिपेदिरे, प्रतिपद्य च पूजयामासुरिति ॥

स्यादेतदेवम्, यदि देवतानां परमार्थतो विग्रहः स्यात्। न खलु तत्र प्रमाणमुपलभामहे। 'वज्रहस्तः पुरन्दरः' इत्यादिका मन्त्रार्थवादास्तु अनुष्ठेयार्थस्मृतिस्तुत्यर्थतामात्रेण विश्राम्यन्तो न पुनरतात्पर्यविषयं देवतानां विग्रहवत्त्वं कल्पयितुं प्रभविष्यन्ति। अयं चार्थो वेदार्थमीमांसाप्रवृत्तेन जैमिनिनैव समर्थित इति कथं नाम भवदुक्तिरुक्तपूर्वा संगच्छताम्? आः केनापि कबन्धमीमांसकेन वञ्चितो भवान्। वैयासिकं तावत्प्रतिपद्यतां देवताधिकरणम्, येन वेदतात्पर्यं स्फुटावभासं भविष्यति। ततश्च, मन्ये, न खलु भवान् देवतानां विग्रहवत्त्वं संशयिष्यते। जैमिनिस्तु भगवान्न मात्रयाप्यत्रापराध्नोति। सूत्रं व्याकुर्वाणाः कबन्धमीमांसकाः परमन्धे तमसि निपेतुः। "न खलु घटस्यायमपराधः, यदन्ध एनं न पश्यति" इति हि न्यायविदः। तथा च आर्याणामतिचिरप्रवृत्तमाचारमवलोक्य बौद्धा अप्यात्मना परिजगृहुरिमं संप्रदायमित्यकामेनाप्यगत्या स्वीकर्तव्यं भवति भवता। बहवः खल्वार्यवैदिकधर्मा बुद्धमतेनाप्यनुसृता इति ननु भवद्गोष्ठमहिष्ठा एव विलिखन्ति। दृश्यतां *दत्तमहाशयस्य प्राचीनभारताभिधनिबन्धने तृतीयो भागः ॥

* R. C. Dutt's Ancient India Part 3.

इतः परं बुद्धनिर्वाणसमयात्प्रागेव विग्रहाराधनस्यास्तितां चरित्रप्रणालिकया साधयितुं संरभामहे । यद्यपि विग्रहाराधनस्य वैदिकत्वसमर्थनेनैव बौद्धोपक्रमत्ववादो गर्भस्रावेणैव गलितः, अथापि द्विर्बद्धन्यायेन मन्दमतीनां प्ररोचनार्थं अस्माकमयमारम्भः । तत्र पतञ्जलिं पाणिनिं च प्रथमतः परामृशामः । "इवे प्रतिकृतौ" इत्यधिकारे "जीविकार्थे चापण्ये" इति सूत्रयामास भगवान्पाणिनिः । अस्य चार्थ एवं वृत्तिकृताभिहितः— "जीविकार्थं यदपण्यं तस्मिन्नभिधेये कनो लुब् भवति । विक्रीयते यत् तत् पण्यम् । वासुदेवः शिवः स्कन्दः विष्णुः आदित्यः । देवलकादीनां जीविकार्था देवप्रतिकृतय उच्यन्ते" इति । "याः प्रतिमाः परिगृह्य गृहाद्गृहं भिक्षमाणा अटन्ति, ता एवमुच्यन्ते । ता हि जीविकार्था भवन्ति । देवलका अपि त एव भिक्षवोऽभिप्रेताः । यास्त्वायतनेष्वभ्युदयनिःश्रेयसार्थं प्रतिष्ठाप्यन्ते पूज्यन्ते च, तासु 'अर्चासु पूजनार्थासु—' इति वक्ष्यमाणेन लुब्भवति" इति वृत्तिव्याख्याता हरदत्तः । "अपण्य इत्युच्यते । तत्रेदं न सिध्यति— शिवः स्कन्दो विशाख इति । किं कारणम्? मौर्यैः (?) हिरण्यार्थिभिरर्चाः प्रकल्पिताः । भवेत्तासु न स्यात् । यास्त्वेताः संप्रति पूजार्थास्तासु भविष्यति" इत्यत्रैव सूत्रे पतञ्जलिः । अनेन हि ज्ञायते— पाणिनेः पतञ्जलेश्च काले प्रतिमाराधनं संप्रतिपन्नमासीदिति । एतौ च भगवन्तौ बुद्धनिर्वाणसमयात्सुदूरं प्राचीनाविति ऐतिहासिकानां विमर्शः ॥

अत्र प्रत्यवतिष्ठन्ते— व्याकरणभाष्यकारश्च पतञ्जलिश्चन्द्रगुप्तमौर्यपुष्यमित्रयवनान् स्मरति । ततश्चायं क्रैस्तववर्षारम्भात्प्राक् द्वितीये वर्षशतक एव स्यादिति हि पाश्चात्त्यानां बहूनां विमर्शकानां निष्कर्षः । अत एव ते तृतीये तादृशे वत्सरशतके पाणिनेः सत्तां संभावयन्ति । सति चैवं पाणिनिः पतञ्जलिश्च बुद्धनिर्वाणसमयात्प्राक् स्थिताविंत्युक्तिः कथं नामोपपद्यते ? नैतदेवम् । एते किल पतञ्जलेः कालनिर्णये न हेतवः, परं हेत्वाभासा इति विमर्शकाग्रेसरो भाष्याचार्यो नाम पण्डितवर्यः स्वकीये *पतञ्जलिकालनिर्णयाभिधे ग्रन्थे सुष्टु निरूपयामास, खण्डयामास च प्रमाणैरुपपत्तिभिश्च पाश्चात्त्यपण्डितप्रकटितानि कारणानि । स च पण्डितः, पतञ्जलेर्वैदिकयाज्ञिकसंप्रदायपक्षपातितां प्रतिमुहुः परामृशन्, "निर्वाणोऽवाते" इति सूत्रे बौद्धादृतं निर्वाणपदं प्रकृत्य कर्तव्येऽपि बहुशः कोलाहले तत्र भाष्यकृतो मूकीभावमालोचयन्, "अजेर्व्यघञपोः" इति सूत्रभाष्यस्थेन वैयाकरणसूतसंवादेन पतञ्जलिसमये संस्कृतभाषाया व्यावहारिकतामनुमिन्वन्, 'सकलश्रोतृजनज्ञापनानुरोधेन शिष्यप्रार्थनया च बुद्धः स्वोपदेशावसरे पालीभाषां परिजग्राह' इति बौद्धग्रन्थपरामर्शेन बुद्धसमये संस्कृतेतरस्याः पालीभाषाया एव लोके व्यावहारिकतामुत्पश्यन्, अस्याश्च भाषापरिवृत्तेः सुदूरविप्रकृष्टमन्तरमपेक्षणीयं स्यादिति च भावयन्,

---

* Age of Patanjali

भगवतः पतञ्जलेः क्रिस्तुजननात्पूर्वं दशमे नवमे वा वर्षशतके स्थितिं परिच्छिनत्ति । पाणिनिकालविषये च भवज्जातीयकानामेव नाद्यावधि वादकोलाहलो विश्रान्तः । इत एकान्तरिते वर्षे ‘ इण्डि-यन् आण्टिकेरि ’ इति प्रसिद्धायां पत्रिकायां कोऽपि विमर्शकः, पाणिनेः क्रैस्तववर्षारम्भात्प्राक् अष्टमे सप्तमे वा शरच्छतके सत्तां विलिलेखेति तत एवावधार्यतामायुष्मता । अथोच्येत — बहुभिर-न्यथा निर्णीते विषये कथमेकस्य द्वयोर्वा वचनं स्थास्यतीति ; अहो महान् पक्षपातः । “ एकोऽन्धो दर्शने असमर्थः, तत्समुदायश्च शतमप्यसमर्थम् । एकश्चक्षुष्मान् दर्शने समर्थः, तत्समुदायश्च शतमपि समर्थम् ” इति पतञ्जलेः सुभाषितं विमृशतु भवान्, यं हि भवान् पदग्रहणेन बलात्पश्चादाकर्षति । इत्थं च विग्रहाराधन-संप्रदायस्य चिरंतनात् पाणिनेरपि प्राचीनतां प्रतिपद्यमाना वयं क-थमिव तस्य बौद्धोपज्ञतां क्षणमपि सहेमहि ॥

किंच, शाकटायनो नाम कश्चन प्राचीनो वैयाकरण आ-सीत्, यं किल “ नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् ” इति पतञ्जलिः, “ लङः शाकटायनस्यैव ” इति पाणिनिः, “ तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसम-यश्च ” इति यास्कश्च स्मरति । यास्कस्य पाणिनेश्च दूरविप्र-कृष्टमन्तरमिति, ततश्च यास्कः क्रैस्तववर्षतः प्राक् पञ्चमादब्दश-तकान्नार्वाचीनः इति च पाश्चात्यविद्वद्गोष्ठीप्रवादः । तेन च

यास्कादपि पुरातनेन शाकटायनेन "तुल्ये कः संज्ञाप्रतिकृत्योः" इति स्वकीये शब्दानुशासने सूत्रितम् । "प्रतिकृतिः काष्ठादिमयं प्रतिच्छन्दकम् । अश्वस्य तुल्यः अश्वकः । कस्याचित्संज्ञेयम् । अश्वस्य तुल्यम् अश्वकं रूपम् । अश्विका प्रतिमा । एवं हस्तिकं देवकमित्यादि" इति तत्र वृत्तिकारः । ततश्च प्राचीनतमात् शाकटायनात्पूर्वमेव भारते विग्रहाराधनमासीदिति सिध्यति । अयं च शाकटायनो जैन इति महाश्रमणसंघाधिपतिरिति च चिन्तामणिटीकायां यक्षवर्माचार्यो विलिखति । वैदिकानामिव आर्हतानामपि चहोश्चिरात्पूर्वमुपक्रान्तो बिम्बार्चनसंप्रदायोऽद्यावधि समाचर्यमाणः संलक्ष्यते । बुद्धमतस्य शाखाभेदोऽयं जैनसंप्रदाय इति प्राचीनः प्रवादस्त्वतीतकाल इति, मूलशिथिल इति, जैनमतं बुद्धमतात्पुरातनमिति, जैनमतस्थापको महावीरश्चिराय प्राचीन इति च चरित्रनिपुणो [1] दत्तमहाशयः सहेतुकं सिद्धान्तयति ॥

अपि च, यास्कनिरुक्तं तावत् क्रिस्तुजननात्प्राचीने पञ्चमे वर्षशतके कृतं स्यादिति पाश्चात्त्यपण्डिता विलिखन्ति । तथा च यास्कस्य समयो बुद्धनिर्वाणसमयस्य प्रत्यासन्नतरः पूर्व इत्युक्तं भवति । निरुक्ते च सप्तमे अध्याये षष्ठे खण्डे "अथाकारचिन्तनं देवतानाम्" इत्यादिमानि सूत्राणि यास्कसमयेऽपि विग्रहाराधनस्य

1. R. C. Dutt's Ancient India Part 3.

मत्तामनुमापयितुं प्रभवन्ति । अयं चार्थो विमर्शकेन गोपीनाथमहाशयेन स्वकीये निबन्धे निरूपितः ॥ *

अन्यच्च, ब्राह्मणग्रन्थानां कालः क्रिस्तुवर्षात्पूर्वम् अष्टमशतकमारभ्य पञ्चमवर्षशतकावधिरिति, सूत्रप्रस्थानस्य च समयः पञ्चमं शतकमारभ्य द्वितीयशतकावसान इति, महाकाव्यानां कालश्च पञ्चमशतकात्प्रभृति प्रथमशतकार्धान्त इति च पाश्चात्यानां विमर्शकानां सिद्धान्तः । षड्विंशब्राह्मणे च विद्यमानो दैवतप्रतिमारोदनादिवृत्तान्तः पूर्वमेव प्रदर्शितः । आश्वलायनगृह्यपरिशिष्टेऽपि "स सर्वा दिशोऽन्वावर्तते । अथ यदास्यायुक्तानि यानानि प्रवर्तन्ते । देवतायतनानि कम्पन्ति देवताप्रतिमा हसन्ति गायन्ति —" इत्यारभ्य किंचिदेव भेदेन षड्विंशब्राह्मणवाक्यान्येव दृश्यन्ते । तत्रैव ग्रन्थे प्रतिमाद्रव्यप्रतिष्ठादिकमपि निरूप्यते । तथा च ब्राह्मणग्रन्थावतारात्पुरस्तादेव समनुष्ठीयमानस्य विग्रहाराधनस्य बौद्धोपक्रमता न लेशेनाप्युपपद्यते ॥

अपरं च, भगवान् पाणिनिः "पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः" इति सूत्रयन्, स्वसमयात्पूर्वं किमपि नटसूत्रमासीदिति ज्ञापयति । तच्च नटसूत्रं संप्रति समुपलभ्यमानं भरतनाट्यशास्त्रमेवेति बहूनामाशयः । यतः, अलंकारप्रस्थाने बहुभिर्बहु-

* Elements of Hindu Icnagraphy of T. A. Gopinatha Rao, M. A Vol. 1 P. 5

था व्याख्यायमानं भरतसूत्रमिति व्यपदिश्यमानं च "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति सूत्रमत्रैव दृश्यते। भरतं प्रमाणयद्भिश्च व्याख्यातृप्रभृतिभिरेतदन्तर्गतान्येव वचनानि तत्र तत्रोद्ध्रियमाणानि पश्यामः। "मुनिना भरतेन यः प्रयोगो भवतीष्वष्टरसाश्रयो नियुक्तः" इति कालिदासोक्तरीत्या रसानामष्टविधत्वमेवात्र निरूप्यते। एवं च पाणिनेः प्राचीनस्य भरतस्य नाट्यशास्त्रे तृतीयाध्याये रङ्गनिर्माणदेवताप्रतिष्ठाबलिकर्मादिविधिः पठ्यमानः प्रतिमापूजनस्य चिरस्य प्राचीनतामवगमयिष्यति। महामहोपाध्यायः श्रीमान् हरप्रसादशास्त्रिमहाशयस्तु, संप्रति समुपलभ्यमानं नाट्यशास्त्रं न प्राचीनभरतमुनेः कृतिर्भवितुमर्हति। परमिदं भरतसूत्रतः संगृहीतं विस्तारितं वा स्यादिति मन्यमानः सांप्रतिकस्य नाट्यशास्त्रस्य क्रैस्तप्राचीनद्वितीयशताब्दीसमुद्भूतत्वं विलिखति[1]। एवमपि प्राचीनभरतसूत्रेष्वपि प्रतिमास्थापनपूजनादिविधीनां सत्त्वावश्यंभावमनुसिन्वतां सिद्धं नः समीहितम्॥

किंच, चाणक्यविरचिते अर्थशास्त्रे धर्मस्थीये— "ग्रामदेववृषा वा अनिर्दशाहा वा धेनुरुक्षाणो गोवृषाश्चादण्डाः" इत्यस्त्येकं सूत्रम्। तत्र देववृषा नाम देवोद्देशेन देवालयविसृष्टा वृषा इति ज्ञायते। "अनिर्दशाहां गां सूतां वृषान्देवपशूंस्तथा। सपालान्वा

1. The Journal and Proceedings of the Asiatic Society Bengal Vol No. 9 1909, P. 351—361.

विपालान्वा नदण्ड्यान्मनुरब्रवीत्" इति मनुस्मृतिं व्याकुर्वन् कुल्लूकभट्टः "हरिहरादिप्रतिमासंबन्धिपशून्" इति देवपशुशब्दार्थं विलिखति। चन्द्रगुप्तसचिवश्च चाणक्यः क्रैस्तप्राचीनचतुर्थवर्षशतके स्थित इति पाश्चात्यानामाशयः। ततोऽपि पूर्वमासीदिति तु पण्डितभाष्याचार्यस्याभिप्रायः। यदि विग्रहाराधनस्य तदुपजीवकस्य देवतायतनस्य च बौद्धोपक्रमता वास्तविकी स्यात्, तर्हि बुद्धनिर्वाणसमयान्नातिविप्रकृष्टान्तरस्य चाणक्यस्य काले देवाद्युद्देशेन देवतायतनेषु वृषोत्सर्गानुष्ठानं न खलु संभाव्येत। तथा च देवतायतनप्रतिमापूजनादिकं बुद्धसमयादपि प्राचीनतरमिति सिध्यति॥

किच, कल्हणो राजतरङ्गिण्याम्, अशोकनाम्ना केनचिद्राज्ञा कश्मीरेषु विजयेशक्षेत्रस्य पाषाणमयः प्रकारः कारित इति लिखति[1]। स च राजा इतो वर्षसहस्रत्रयात्प्राचीन इति तस्मादेव ग्रन्थाज्ज्ञायते[2]॥

अपि च, यदा योगशास्त्रं समुत्पन्नम्, ततः पूर्वमेव नियतं विग्रहपूजानुष्ठानेन भाव्यम्। अन्यथा हि संप्रज्ञातसमाधिरेव नोपपद्येत। स्थूलं खलु तस्य भवत्यालम्बनम्। तथा च "वितर्कविचारानन्दास्मितारूपानुगमात्संप्रज्ञातः" इति सूत्रे "वितर्कः चित्त-

---

1. "जीर्णं श्रीविजयेशस्य विनिवार्य सुधामयम्। निष्कल्मषेणाश्ममयः प्राकारो येन कारितः॥" (1—105)
2. तृतीयगोनन्दादतिप्राचीनोऽयम् अशोकः। तृतीयगोनन्दश्च 1919 इतिसंख्याके कलिवत्सरे आसीत्।

स्यालम्बने स्थूल आभोगः" इति भाष्यमुपादाय, "स्वरूपसाक्षात्कारवती प्रज्ञा आभोगः। स च स्थूलविषयत्वात्स्थूलः। यथा हि प्राथमिको धानुष्कः स्थूलमेव लक्ष्यं विध्यति, अथ सूक्ष्मम्; एवं प्राथमिको योगी स्थूलमेव पाञ्चभौतिकं चतुर्भुजादि ध्येयं साक्षात्करोति, अथ सूक्ष्मम्" इति वाचस्पतिमिश्रो व्याचष्टे। योगशास्त्रस्य च प्रचारः पतञ्जलेरपि प्रागासीदिति, अत एव सूत्रे अनुपदमुपात्तमिति च वाचस्पतिमिश्रः। "हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः" इति योगयाज्ञवल्क्यः। ततश्च पतञ्जलेश्चिरपुरातनं प्रतिमापूजनमिति साधयन्ति तर्कवादनिष्णाताः। अयं च पतञ्जलिर्व्याकरणपतञ्जलेर्विभिन्न इति, ततः सुदूरं प्राचीन इति च पाश्चात्त्यविमर्शकाः। "योगेन चित्तस्य पदेन वाचां मलं शरीरस्य तु वैद्यकेन। योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि" इत्यद्य यावत्सर्वैरपि विद्यार्थिभिर्भाष्यारम्भसमये पठ्यमानं पद्यं प्रमाणयन्तो वयम्, पण्डितभाष्याचार्यनिर्णीतं समयमेव पतञ्जलेः साधुं मन्यमानाः पतञ्जलिद्वैधवैरसादात्मानमभिरक्षामः॥

अन्यच्च, श्रीमान् गङ्गोलीमहाशयः स्वविलिखिते [1] दाक्षिणभारतलोहप्रतिमानामके ग्रन्थे एवं वदति — "अगस्त्यमहर्षिकृतः सकलाधिकारो नाम शिल्पशास्त्रग्रन्थः तञ्जापुरराजकीयसरस्वती-

1. Gangooli's South Indian Bronzes.

भाण्डागारे विद्यते । तत्र च पञ्चमोऽध्यायः प्रतिमानिर्माणतत्परिष्कारादिकं सुष्ठु विशदयति। उत्तरतः प्रस्थाय दक्षिणां दिशमागतेन अगस्त्येन आर्यसहवासजनितपरिष्कारसहकारेणैव इदं शास्त्रं निर्मितं स्यादिति तद्ग्रन्थपरिशीलनया संभाव्यते । अगस्त्यस्य दक्षिणदेशागमनं क्रैस्तववर्षात्पूर्वं दशमाद्वर्षशतकान्नार्वाचीनमिति चरितपरिशीलिनां निर्णयः । इदं च ग्रन्थरत्नमर्वाचां काश्यपादीनां मार्गप्रदर्शकमासीत्" इति । अस्मिंश्च वस्तुतत्त्वे विमृश्यमाने , बौद्धैरेव शिक्षिता वैदिकाः प्रतिमानिर्माणतत्पूजनादिकमिति केषांचित्प्रवादो नूनमसंगीतकमस्थाने नर्तनम् । काश्यपेनापि प्रथमतः "द्वादशाङ्गुलकं वक्त्रं ललाटं चतुरङ्गुलम्" इत्यारभ्य "स्वरूपा लक्षणोपेता प्रतिमा वृद्धिदा भवेत्" इत्यन्तेन सामान्यतः प्रतिमापरिमाणादिकमभिधाय , पश्चात् "एकदंष्ट्रो गजमुखश्चतुर्बाहुर्विनायकः" इति प्रक्रम्य "सुरूपा सुप्रभागैव सर्वाभरणभूषिता । स्वायुधैश्च समायुक्ता कर्तव्या प्रतिमा शुभा" इत्यन्तेन तत्तद्देवताभेदस्य स्वरूपादिकं विस्तरेण प्रतिपादितम् । अयं च काश्यपः "तृषिमृषिकृषेः काश्यपस्य" इति पाणिनिना स्मर्यमाणो वा , परो वेति नास्माकं निर्णयः । नन्वेतौ शिल्पशास्त्रकर्तारौ अगस्त्यकाश्यपौ प्राचीनौ महर्षी इत्यत्र किं प्रमाणमित्यस्माकमनुयोगः पुरस्तिष्ठतीति चेत् , वैपरीत्ये वा भवतः किं प्रमाणमित्यस्माकमनुयोगस्ततोऽपि पुरस्तात्स्थास्यति। वस्तुतस्तत्र तत्कृतत्वोक्तिरेव प्रमाणमस्माकमिति वदामः । तन्नाम्ना

आ॰ ानमात्मनैव व्यपदिशन्तौ कावपि नवीनावेताविति संदिहानः वय॰ क्पूर्वमभिप्रायं निराचक्ष्महे इति चेत्, किं क्रियताम्: स्व-सत्त नेव संशयानो भवानात्मानमेव कदाचित्प्रत्याख्यास्यति। संश यात नः फलं च भगवतैव गीयते॥

इदं चान्यत्—क्रैस्तववर्षात्प्राचीने द्वितीयस्मिन्नेव वर्षशतके समु कीर्णा देवताप्रतिमा शिवलिङ्गं गरुडस्तम्भश्च समुपलभ्यन्ते। तत्रो कीर्णानि रूपाणि च शिल्पविद्यायास्तदा महतीमभिवृद्धिमावे-दयां त। यदि च प्राचीनमभूत्वा प्रतिमानिर्माणादि शिल्पं बुद्धनि-र्वाण द्वर्वाचीनमभविष्यत्, न कदाचिदपि तर्हि ईदृशं सौष्ठवं सम-लक्षि ष्यत। अतः प्रतिमानिर्माणादिकस्य अर्वाचीनत्ववादो न खलु युक्ति सह इति श्रीमान् [1]आनन्दकुमारस्वामी, [2]गोपीनाथरायः. [3]स्टे कोनामहाशयश्च अभिप्रयन्ति॥

किंच, विमर्शनिपुणः पण्डितमणिर्महामहोपाध्यायः श्रीमान गण तिशास्त्रिमहाशयः, प्रतिमानाटकोपोद्घाते विचारसहैः प्रमाणैः श्लोव नुमाभिरुपपत्तिभिश्च भासमहाकवेः क्रैस्तप्राचीनायां पञ्चम्यां षष्ठ्॰ ं वा शताब्द्यां स्थितिं सिद्धान्तयामास। तत्र च प्रतिमाना-

1 Ananda Coomarasamy's 'Arts and Crafts of India'

2 T. A. Gopinatha Rao's 'Elements of Hindu Iconography.'

2 Sten Konow's article in the "Indian Antiquary" 1909. (p. 146—149.)

टके तृतीयाङ्के प्रतिमागृहं नाम कोऽपि विषयः समुपनिबद्धः। तत्र च अतिक्रान्तानां दिलीपादीनां राज्ञां प्रतिमाः प्रतिष्ठापिता देवकुलिकैः पूज्यन्त इत्यस्ति संदर्भः। तत्रैवाङ्के "कस्य नु खलु दैवतस्य स्थानं भविष्यति? नेह किंचित्प्रहरणं ध्वजो वा बहिश्चिह्नं दृश्यते। भवतु प्रविश्य ज्ञास्ये। (प्रविश्यावलोक्य) अहो क्रियामाधुर्यं पाषाणानाम्। अहो भावगतिराकृतीनाम्। दैवतोद्दिष्टानामपि मानुषविश्वासतासां प्रतिमानाम्" इति भरतस्य वाक्यं दृश्यते। तथा च भासकाले न केवलं देवतानाम्, परं सुगृहीतनाम्नां पूर्वपुरुषाणामपि प्रतिमाः पूजार्हाः स्थापिता अभूवन्निति सुस्पष्टं ज्ञायते॥

अपि च, श्रीभागवते रुक्मिणीसंदेशावसरे "पूर्वेद्युरस्ति महती कुलदेवयात्रा यस्यां बहिर्नववधूर्गिरिजामुपेयाम् (यात्)" इति, उत्तरत्र "आसाद्य देवसदनं धौतपादकराम्बुजा। उपस्पृश्य शुचिः शान्ता प्रविवेशाम्बिकान्तिकम्" इति च पठ्यते। भगवतः कृष्णस्य चावतारसमयो द्वापरयुगचरमभाग इत्यास्तिकानां निर्णयः। केचित्तु—"ऋक्षादृक्षं शतेनाब्दैर्यात्सु चित्रशिखण्डिषु। तच्चारे संहिताकारैरेवं दत्तोऽत्र निर्णयः॥ आसन्मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ। षड्द्विकपञ्चद्वियुतः शककालस्तस्य राज्यस्य॥" इति वदन्तः, "भारतं द्वापरान्तेऽभूद्वार्तयेति विमोहिताः" इति, "शतेषु षट्सु सार्धेषु त्र्यधिकेषु च भूतले। कलेर्गतेषु वर्षाणामभूवन्कुरुपाण्डवाः॥" इति च विलिखन्तः, भगवतोऽपि स

एव समय इत्यातिष्ठन्ते । यद्वा तद्वा वस्तुतत्त्वमास्ताम् । श्रीकृष्णविवाहकालेऽपि देवतायतनप्रतिमापूजादिकमासीदित्यत्र न कोऽपि संशयः । स्यादेतत्, यदि भागवतं पुरातनम् । तदेव न । क्रैस्तवर्षाणां त्रयोदशे शतके किल इदं पुराणं निर्मितमित्यस्माभिर्विश्वस्यत इति चेत्, कामं भवान्स्वेच्छया यत्किमपि विश्वसितु । परीक्षितं प्रति शुकमहर्षिणा कथितमितिवृत्तमिति तु विश्वसिमो वयम् । यदपि वोपदेवेन कृतमिदमिति प्रत्यवस्थानम्, तदपि भागवतव्याख्यातृभिरेव निपुणं निराकृतम् । तथा च भागवतपर्यालोचनया विग्रहाराधनं चिरन्तनमिति निर्बाधं सिध्यतीति ब्रूमः ॥

किंच, श्रीमहाभारतेऽपि वनपर्वादिषु बहूनि देवायतनान्युल्लिखितानि सन्ति । अर्जुनश्च तीर्थयात्रावसरे गोकर्णक्षेत्रं जगामेति पठ्यते । भीष्मपर्वणि च दुर्निमित्तनिरूपणावसरे "देवताप्रतिमाश्चैव कम्पन्ति च हसन्ति च । वमन्ति रुधिरं चास्यैः स्विद्यन्ति प्र पतन्ति च" इति पद्यं पठ्यते । इदं च प्रदर्शितपूर्वस्य षड्विंशब्राह्मणस्योपबृंहणमिति अर्थतः शब्दतः संदर्भतश्च सुवेदं मेधाविनाम् । अतोऽस्य पद्यस्य प्रक्षिप्तत्वादिशङ्काया अपि नावसरः । भारतं च भारतयुद्धादतिसंनिकृष्ट एव समये विलिखितमिति दत्तमहाशयप्रभृतयश्चरित्रग्रन्थकर्तारो विलिखन्ति । भारतयुद्धं च इतो वर्षसहस्रत्रितयान्नार्वाचीनमथवा संनिकृष्टमिति विमर्शका गोपालार्यवैद्यप्रभृतयो निर्णयन्ति । "भारतं तावत् क्रैस्तप्राचीनायास्तृतीयस्याः शताब्द्याः परस्तादेव विरचितं स्यात्" इत्युत्प्रेक्षमाणो मेग्डानलस्तु

"आश्वलायनसूत्रे भारतं स्मृतम्" इति कथयता, "आश्वलायनं च सूत्रेषु प्राचीनम्" इति संगिरमाणेन, "सूत्रकालारम्भश्च क्रैस्तप्राचीनायां पञ्चम्यां शताब्द्यामेव" इत्यातिष्ठमानेन च आत्मनैव विधानिष्यते। अत्रेयमाशङ्का केषांचित्— सांप्रतिकं हि भारतं ग्रन्थबहूकरणपरिवृत्तौ तृतीयस्यां निष्पन्नमिति हेतुभिर्जानीम इति; किमत्र वन्दनीयानां विषये वयं वदिष्यामः, ये ह्येवंदर्शिना तपोमहिम्ना विजयन्ते। नन्वत्र हेतवोऽपि प्रकटीकृता इति चेत्, किं ततः? न खलु तर्कः क्वचन प्रतिष्ठितिं यास्यति; अन्येऽपि हेतुभिरेव खण्डयिष्यन्ति। तथा च भट्टः— "यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः। ततोऽपि कुशलैरन्यैरन्यथैवोपपाद्यते॥" इति। तथा च प्राचीनतमेन पञ्चमेन वेदेनानुगृहीतस्य विग्रहाराधनादिसंप्रदायस्य बौद्धोपज्ञत्ववादः केवलं वैदिकविद्वेषमूलक इति व्यक्तम्॥

अन्ततश्चेदम्— श्रीमति रामायणे उत्तरकाण्डे अवतारसमाप्तिसमये विभीषणं प्रति "आराधय जगन्नाथमिक्ष्वाकुकुलदैवतम्। आराधनीयमनिशं सर्वैर्देवैः सवासवैः" इति श्रीरामभद्रस्य वचनं दृश्यते। तत्र च इक्ष्वाकुकुलदैवतं नाम इक्ष्वाकुभिश्चिरात्पूज्यमाना श्रीरङ्गनाथार्चा, पाद्मादिवचनैरैककण्ठ्यात्। तथा च श्रीरामभद्रकालेऽपि विग्रहाराधनमासीदिति सिध्यति। रामभद्रश्च त्रेतायुगे अवततारेति विदितमिदमास्तिकानाम्। अवरतः श्रीरामायणकाले आसीदिति वापि शक्यं निश्चेतुम्। श्रीरामायणं च क्रैस्तप्राचीनायाः पञ्चम्याः शताब्दीतः प्रागेव विरचितमिति मेग्डानल

एव विलिखति । ततश्च विग्रहाराधनस्य बुद्धनिर्वाणादर्वाचीनता सर्वात्मना न घटते ॥

अत्र प्रत्यवतिष्ठन्ते — श्रीरामायणं तावत् बुद्धोपदिष्टजातकमालास्थं दशरथजातकमवलम्ब्य केनाप्यार्येण वैदिकेन विरचितम् । तस्य प्रसिद्धिबहुलीभावादिकं मनसि कलयतैव रचयित्रा वाल्मीकिर्नाम कस्यचन मुनेः शिरसि कर्तृत्वभार आरोपितः । किं च बालकाण्डमुत्तरकाण्डं च विहाय परिशिष्टा पञ्चकाण्ड्येव प्रथमत आसीत् । पश्चात्तु केनापि कैश्चिद्वा प्रथमं चरमं च काण्डं माहात्म्योद्भावनाय तत्र संयोजितम् । एतदभिप्रयन्नेव मेग्डानलोऽपि रामायणबहूकारपरिवृत्तिरन्तिमा क्रैस्तप्राचीनायां द्वितीयस्यां शताब्द्यां स्यादिति संभावयति । ततश्च उत्तरकाण्डगतं वचनं न प्रमाणसरणिमवगाहते । युद्धकाण्डस्थे "लब्ध्वा कुलधनं राजा लङ्कां प्रायाद्विभीषणः" इति श्लोके कुलधनशब्दः कुलक्रमागतं लङ्काराज्यमेव निर्दिशतीति न तत्र प्रत्याशावकाशः । "कुलधनम् इक्ष्वाकुकुलधनं श्रीरङ्गविमानमिति संप्रदायः" इति व्याख्योक्तिस्तु न साध्वीति ॥

अत्र वदामः— एवंजातीयकानां युक्तिरूहश्च परस्परं प्रतिक्षिपत इति नास्माकमत्र प्रत्युत्तरावकाशः । ते हि स्वयूथ्यविसंवादेनैव पराहण्यन्ते । मध्यस्थशङ्कावारणाय तु प्रयतामहे । बुद्धो हि स्वोपदेशस्य शिष्यबुद्धिसंक्रमाय प्राचीनानि नामानि इतिवृत्तानि च परिगृह्य कल्पिता एव कथा उपादिक्षदिति नेदं तिरोहितं जातकमालापरिशीलिनाम् । तस्मात् दशरथजातकस्य मूलत्वकल्पनं गग-

नकुसुमसौरभानुभव एव । प्रथमं चरमं च काण्डं पश्चादायोजितमिति तत्प्ररहस्ये भवतः क एवमाह? मेग्डानल इति चेत्, अत्र तस्य को गुरुः; वीबर इति चेत्, तस्य कोऽयमुपदेशकः? अहो! एकस्यान्धस्य अपरेणान्धेन यष्टिः प्रदीयते । भासमहाकविना इति वृत्ततः सर्वात्मना समादृतं रामायणं न कदाप्यर्वाचीनतामर्हति । अथ वा तुष्यन्तु भवन्तः । प्राचीनतया भवदभिमतादेव अयोध्याकाण्डात् पद्यान्युदाहरामः । तत्र हि "वाग्यतां देवतागारे ददर्शायाचतीं श्रियम्" इति चतुर्थसर्गे, "ध्यायन्नारायणं देवं स्वास्तीर्णे कुशसंस्तरे । वाग्यतः सह वैदेह्या भूत्वा नियतमानसः । श्रीमत्यायतने विष्णोः शिश्ये नरवरात्मजः" इति षष्ठसर्गे च पठ्यते । इत्थं कण्ठोक्तौ सुलभायां कुलधनशब्दव्याख्याकोलाहले न वयं प्रवर्तामहे । एवं बहुभिः प्रमाणैरुपपत्तिभिश्च बह्वीभिर्विमृश्यमाने, विग्रहाराधनस्य देवतायतनस्य च वैदिकता सूपपादेति तत्र बौद्धानां मार्गदर्शित्वप्रवादो विमर्शकमन्यानामविमर्शकानां समाजेनैव श्रद्धेयः, न पुनर्वस्तुपरं पक्षपातेन विना परीक्षमाणानामास्तिकानामिति सिद्धम् । अपरांस्तु परेषामाक्षेपान् द्वितीये परिच्छेदे प्रतिक्षेप्स्यामः ॥

विग्रहाराधनं बौद्धोपज्ञमित्यज्ञभाषितम् ।
निरस्य बहुधा तस्य श्रौतभावः समर्थितः ॥

इति वात्स्यचक्रवर्ति कृष्णसूरि विरचिते अर्चावतारवैभवे
विग्रहाराधनवैदिकत्वस्थापनं नाम प्रथमः परिच्छेदः ॥

——o(*)o——

॥ श्रीः ॥

## ॥ अथ द्वितीयः परिच्छेदः ॥



परो व्यूहश्च बिभवो हार्दश्चार्चेति पञ्चधा ।
विग्रहानिच्छया गृह्णन्विभाति परमः पुमान् ॥

अथेदानीमर्चावतारवैभवमधिक्रियते । अत्रेदमादितः किंचित्प्रतीतव्यं भवति, यत् उपर्युपकरिष्यति प्रकृतस्य । अस्माकं खल्व-स्तुकानामास्तिकानां न केवला श्रुतिः, न च तत्रापि केवलो मन्त्र-भागः, नापि केवलं बाह्वृच्यं धर्मे प्रमाणम् । एष किल समुद्घोषः अतः कुतोऽप्यवगतकतिपयवेदपदानामनाकलितवेदोपबृंहणन्यायक-लापानामस्थाने निजविमर्शकौशलमुपदर्शयतां कुतर्ककल्ककलुषित-मतीनां समजायैव स्वदिष्यते । धर्मो हि नाम वेदेषु वेदान्तेषु स्मृ-तिषु इतिहासेषु पुराणेषु शिष्टाचारेषु च सर्वात्मना समायत्तते । एवं हि भगवान्मनुरनुशास्ति — "वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥" इति । "धर्ममूलं धर्मे प्रमाणम् । शीलं रागद्वेषादि विना शुचि चरित्रम् । आचारः कङ्कणबन्धनादिः । आत्मतुष्टिः वैकल्पिकेषु पदार्थेषु य-स्मिन् गृह्यमाणे आत्मनः प्रीतिः सापि प्रमाणम्" इति सार्वभौमः । व्यासोऽपि — "धर्ममूलं श्रुतिं प्राहुर्धर्मराशिमकृत्रिमम् । तद्विदां

स्मृतिशीले च साध्वाचारो मनःप्रियम् ॥" इति । "पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥" इति, "श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥" इति च याज्ञवल्क्यः । "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥" इति बृहस्पतिः । अत्र अधिकमधिजिगमिषद्भिर्जैमिनीयानि वेदप्रामाण्याधिकरणादीनि द्रष्टव्यानि ॥

एवं पञ्चरात्रमपि कार्त्स्न्येन श्रुतिरिव निर्बाधं प्रमाणम् । इदं च शास्त्रं भगवान्वेदैकवेद्यः परब्रह्माभिधानो वासुदेवः सत्यसंकल्पोऽपारकारुण्यसौशील्यवात्सल्यौदार्यमहोदधिः, धर्मार्थकाममोक्षाख्यपुरुषार्थाभिमुखान् भक्तानवलोक्य, स्वस्वरूपस्वविभूतिस्वाराधनतत्फलयाथात्म्यावबोधिनो वेदानपरिमितशाखान्स्वेतरसकलसुरनरदुरवगाहांश्चावधार्य, तदर्थयाथात्म्यावबोधि स्वयमेव निरमिमीत । एतदपि, वेद ऋग्यजुःसामाथर्वभिरिव आगमसिद्धान्तमन्त्रसिद्धान्त तन्त्रसिद्धान्त तन्त्रान्तरसिद्धान्तैश्चतुर्धा विभिद्यते । एतेषामेव, वेदसिद्धान्तः दिव्यसिद्धान्तः तन्त्रसिद्धान्तः पुराणसिद्धान्त इति, स्वयंव्यक्तः दिव्यः सैद्धः आर्ष इति च क्रमेण संज्ञान्तराणि । यथा च ऋगादिरवान्तरैः शाखाभेदैर्बहुधा विभिद्यते, तथा इदमपि सिद्धान्तचतुष्टयमवान्तरैस्तन्त्रान्तरैरनेकधा भवति । एतेषां सिद्धान्तानां तदवान्तरभेदानां च लक्षणानि फलानि पौष्क-

रश्रीकरादिसंहितासु निरूपितानि संगृह्य, श्रीपाञ्चरात्ररक्षायां नि-गमान्तगुरुर्निरूपयामासेति तत एव तानि द्रष्टव्यानि। एतच्छास्त्र-प्रबन्धाश्च संहिताशब्देन व्यपदिश्यन्ते। संहिताश्च अष्टोत्तरशतमि-ति वदन्ति। एतासु च साक्षाद्भगवन्मुखोद्गततया जयाख्यसात्वत-पौष्करसंहिताः "रत्नत्रयम्" इति प्रसिध्यन्ति। एवमनेकधा-विततमिदं शास्त्रं सर्वांशेनापि प्रमाणमिति सैद्धान्तिकी पद्धतिः॥

अत्र तावदेवं दुरभिनिविशन्ते — पाशुपतादितन्त्रान्तरव-दिदमपि पञ्चरात्रं वैदिकानां प्रतिक्षेपमेव अर्हति; यत इदमपि तन्त्रम्, वेदविरुद्धं च। सन्ति हि श्रुतिविप्रतिपन्ना जीवोत्पत्त्याद-यो बह्वोंऽशाः पञ्चरात्रे। अत एव भगवता बादरायणेन उ-त्पत्त्यसंभवादिसूत्रैरिदं तन्त्रं प्रतिक्षिप्यते। किं च भवदभिमतायां पारमेश्वरसंहितायामेव, प्रथमत इदं तन्त्रं दिव्यमुनिभाषितभेदेन विभज्य, पश्चात् मुनिभाषितमेव सात्त्विकराजसतामसभेदेन विवि-धं निरूप्य, अन्ते संहिताविशेषपुरस्कारेण "सात्वतपौष्करजया-ख्यादीनि शास्त्राणि दिव्यानि, ईश्वरभरद्वाजसौमन्तवपारमेश्वरवै-हायसचित्रशिखण्डिसंहिताजयोत्तरादीनि सात्त्विकानि, सनत्कुमा-रपाद्मोद्भवशातातपतेजोद्रविणमायावैभविकादीनि राजसानि, पञ्च प्रश्नशुकप्रश्नतत्त्वसारादीनि तामसानि" इति विभागः प्रदर्शितः। तत्कथमस्य शास्त्रस्य सर्वांशप्रामाण्यं सेत्स्यति? न खलु कश्चिदास्ति-काभासोऽपि तामसानां प्रामाण्यं कदाचिदभ्युपैष्यति" इति॥

आः! सर्वमपि पदार्थजातं सामान्यदर्शनादैकराश्येन व्यव-हरन्कथमिव भवान्निर्वर्तयिष्यति शरीरयात्राम्। एवं हि भवान् सो-मपानपि सुरापानिव पातृत्वेन समं पश्यन् दूरतः परिहरिष्यति। यच्च पञ्चरात्रे वेदविरुद्धानंशान्पश्यति भवान्; सोऽयम्, पित्तोप-हतेन चक्षुषा गृह्यमाणस्य शङ्खस्य पीतिमा। यथा चैतत्, तथा सुविशदं निरूपितमागमप्रामाण्ये भगवद्यामुनमुनिभिः, भाषितं च तदनुसारिभिर्भगवद्रामानुजमुनिभिः। यदपि बादरायणेन तन्त्रमिदं प्रतिक्षिप्यत इति, तदिदम् आशामोदकेन कुक्षिपूरणम्; तत्र हि भगवान् सूत्रकार आदिमाभ्यां सूत्राभ्यां पूर्वपक्षमुत्थाप्य, अग्रि-माभ्यां समादधानः पञ्चरात्रस्य प्रामाण्यमेव स्थापयति। अन्यथा हि महाभारते पञ्चरात्रं वेदतुल्यं प्रशंसन्, अत्र च प्रत्याचक्षाणः कथमिव बादरायणः श्रद्धेयवचनो भविष्यति? अथ स्यान्मतम्— श्रुतिसंप्रतिपन्नांशे प्रामाण्याभ्युपगमपरं भारतम्, सूत्रं तु वेदविरु-द्धांशे अप्रामाण्यनिरूपणपरमिति न विरोधगन्धोऽप्युभयोरिति; अहो नेयबुद्धेः श्रद्धाजाड्यम्। श्रुतिविरुद्धांशोऽस्तीति, नूनं तव भ-वतः श्रुतमेव विप्रतिपन्नम्। यदपि सात्त्विकादिविभागपुरस्कारेण प्रत्यवस्थानम्, तत्रापि सुहृद्भावेन मया प्रदर्श्यमानम् "अतः सा-त्त्विकराजसतामससंज्ञानिवेशोऽत्र सत्त्वरजस्तमःप्रचुरतत्तत्फलसि-द्धिविशेषतारतम्याभिप्रायेणेति मन्तव्यम्" इति श्रीकवितार्किकसिं-हस्य धीरध्वानिमुपनिशम्य सुतरामुपशाम्यतु भवान्; आलोकयतु च वेदोत्तमभट्टारकप्रणीतं तन्त्रशुद्धम्, येन संशयं विस्रक्ष्यति॥

तथा योगिवर्यस्य भगवतः कुरुकेश्वरस्य द्राविडभाषाविरचिता गाथा अपि वैष्णवानामसाधारणं प्रमाणम् ; याः किल सामवेदसारभूता इत्यभिज्ञाः कथयन्ति, यश्च 'आम्नायानां प्रकृतिमपरां संहितां दृष्टवान्' इति स्तूयते । द्राविडभाषायाः प्राशस्त्यम्, तन्मयीनामेतासां गाथानामाम्नायत्वं प्रामाण्यमखिलोपजीव्यत्वं च महता संरम्भेण आक्षेपसमाधानपुरःसरं श्रीकृष्णपादप्रभृतिभिः पूर्वैः सुष्ठु समर्थितम् । एवमेव परेषामपि दिव्यसूरीणां गाथाः पूर्वोक्तवेदाङ्गतां भजन्त्यः प्रमाणम् ॥

ततश्च —

धर्मस्थानमजीगणन्मुनिगणो यद्यत्पुराणादिकं
तत्तद्द्राविडदिव्यवेदसुरभि श्रीपञ्चरात्रस्थिरम् ।
अस्माकं कमलासहायपदयोरैकान्त्यमातस्थुषां
मानं नूनमतस्तदेव बहुशो मानं प्रदर्शिष्यते ॥

देवतानां परासामप्यर्चाः सन्ति सहस्रशः ।
अथापि श्रीपतेरर्चा प्रकृतामधिकुर्महे ॥

इह खलु श्रियः पतिर्निखिलहेयप्रत्यनीककल्याणैकतानो जगज्जन्मादिकारणं समस्तवस्तुविलक्षणः सर्वज्ञः सत्यसंकल्प आश्रितवात्सल्यैकजलधिः परमकारुणिको निरस्तसमाभ्यधिकसंभावनः परब्रह्माभिधानः परमपुरुषो नारायणः तत्त्वम्, भक्तिः प्रपत्तिश्च हितम्, भगवच्चरणपरिचरणं पुरुषार्थ इत्यौपनिषदो घण्टापथः ॥

स च भगवान् "क्षयन्तमस्य तमसः पराके" "यो अस्याध्यक्षः परमे व्योमन्" "सहस्रस्थूणे विमिते दृढ उग्रे यत्र देवानामधिदेव आस्ते" 'आत्मा केवलतां प्राप्तो यत्र गत्वा न शोचति। ईदृशं परमं स्थानं निरयास्ते च तादृशाः॥' 'तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः' 'दिव्यं स्थानमजरं चाप्रमेयम्' इत्यादिश्रुतिस्मृतिशतप्रतिपादिते आनन्दमयषाड्गुण्यगयपञ्चोपनिषन्मयपञ्चशक्तिमयनित्यविभूतिपरमपदादिव्यपदिष्टे शुद्धसत्त्वमये अकालकाल्ये प्रकृत्यतीते श्रीमति वैकुण्ठे, दिव्यास्थानमण्डपे श्रीभूमिनीलासमेतो महान्तमनन्तभोगिनं दिव्ययोगपर्यङ्कमध्यासीनो नित्यानिरवद्यानिरतिशयदिव्यमङ्गलविग्रहदिव्यभूषणादिव्यायुधः स्वाभाविकानवधिकातिशयज्ञानबलाद्यसंख्येयकल्याणगुणगणमहार्णवः "सदा पश्यन्ति सूरयः" इत्युक्तप्रकारेण नित्यैर्मुक्तैश्च सततमनुभूयमानः संकल्पेनैव सकलमपि जगद्व्यापारं निर्वहन्, अनितरसाधारणेन सांराज्येन विजयत इति सात्वतां प्रक्रिया॥

अत्र च भगवतो विग्रहः शुद्धसत्त्वमयो ज्ञानानन्दात्मको वास्तविकश्च। तथा च "हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात्सर्व एव सुवर्णः। तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" इति, 'यदा पश्यः पश्यते रुक्मवर्णम्—' इति, "आदित्यवर्णं तमसः परस्तात्" इति, "यत्ते रूपं कल्याणतमं तत्ते पश्यामि" इति, 'त्रीणि पदा विचक्रमे' इति, 'तस्य

ह्वा एतस्य पुरुषस्य रूपं यथा माहारजनं वासः’ इति च परः-शताः श्रुतयः, “नित्यं नित्याकृतिधरम्” “रुक्माभं स्वप्नधीगम्यम्” ‘सदैकरूपरूपाय’ ‘नह्यिश्वस्यपवैरूप्यं रूपमन्यद्धरेर्महत्’ इत्यादीनि स्मृतिसहस्राणि च भगवतः कल्याणविग्रहयोगं प्रतिपादयन्ति । तथा ‘नित्यसिद्धे तदाकारे—’ इति पौष्करे, ‘नित्यालिङ्गा स्वभावसंसिद्धिरिन्द्रियाकारा ऽप्यत्यङ्गव्यञ्जनवती’ इति रहस्याम्नायब्राह्मणे च पठ्यते । ‘अशब्दमस्पर्शमरूपम्’ ‘न तस्य कार्यं करणं च विद्यते’ ‘अचक्षुःश्रोत्रं तदपाणिपादम्’ ‘पश्यत्यचक्षुः स शृणोत्यकर्णः’ इत्यादयः शरीरेन्द्रियनिषेधपराः श्रुतयस्तु, भगवतः कर्मायत्तं शरीरं करणायत्तं ज्ञानं च प्रतिषेधन्ति । अयं च विषयविभागः ‘इच्छागृहीताभिमतोरुदेहः’ ‘न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसंभवा’ ‘न भूतसंघसंस्थानो देहोऽस्य परमात्मनः’ इत्यादिभिरवसीयते । इत्थमेव सगुणनिर्गुणसविकारनिर्विकारसक्रियाक्रियभेदाभेदश्रुतीनां परस्परं विरोधः परिहरणीयः । तथा च तत्त्वसारे श्रीवरदगुरवः— ‘यद्ब्रह्मणो गुणविकारशरीरभेदकर्मादिगोचरविधिप्रतिषेधवाचः । अन्योन्यभिन्नविषया न विरोधगन्धमर्हन्ति तन्न विधयः प्रतिषेधबाध्याः’ इति । एतेन निषेधश्रुतिभिया शरीरादिविधिश्रुतीनां शुभाश्रयदिव्यविग्रहादितात्पर्यं परिहाय केवलं प्रातिभासिकशरीरादिपरतां व्याचक्षाणा वृश्चिकाद्भीताः सर्पमुखे पतन्ति । न खलु ‘प्रक्षालनाद्धि’न्यायं जानानः प्राकृतोऽपि पुरस्तादात्मना कथितं परस्तादात्मनैव तात्पर्यभेदेन निराकरिष्यति ॥

अयं च भगवान् अप्राकृतेन पञ्चोपनिषत्प्रतिपाद्येन शुद्धसत्त्वमयेन अस्त्रभूषणरूपविचित्रतत्त्वाश्रयेण दिव्यमङ्गलविग्रहविशेषेण विशिष्टः सन्, परो व्यूहो विभवो हार्दोऽर्चा चेति पञ्चधा भवति। अयं च प्रकारभेदो विग्रहस्यैव फलति, न पुनरात्मस्वरूपस्य; तत्तु सर्वत्राप्येकरूपमेव। एतदेवाशयानः 'अयं विग्रहः परव्यूहविभवहार्दार्चारूपेण पञ्चप्रकारः' इति निगमान्तगुरुरर्थपञ्चकाधिकारे निरूपयति। अधिकं त्वत्र वक्तव्यमुपरिष्टाद्वक्ष्यामः। 'मम प्रकाराः पञ्चेति प्राहुर्वेदान्तपारगाः। परो व्यूहश्च विभवो नियन्ता सर्वदेहिनाम्॥ अर्चावतारश्च तथा दयालुः पुरुषाकृतिः। इत्येवं पञ्चधा प्राहुर्मां रहस्यविदो जनाः॥' इति विष्वक्सेनसंहितायां भगवतो वचनम्। एतानि च पञ्च रूपाणि 'अथ यदतः परो दिवो ज्योतिर्दीप्यते—' 'त्रीणि पदा विचक्रमे' 'नीलतोयदमध्यस्था' इत्यादिभिः श्रुतिभिस्तत्र तत्र प्रतिपाद्यन्त इति प्राहुः। विष्णुतत्त्वदीपिकाकारस्तु— 'अम्भस्यपारे—' इत्यत्र पञ्चापीमानि रूपाण्युक्तानीत्याह। एतस्य चानुवाकस्य पुरुषसूक्तशेषत्वादस्या ऋच एवं तात्पर्यकल्पने न कोऽपि दोष इति वदन्ति। अत्र 'अम्भस्यपारे' इति पद्मनाभो नाम व्यूहः, 'भुवनस्य मध्ये' इति सूर्यमण्डलान्तर्वर्ती विभवः, 'नाकस्य पृष्ठे' इति परः, 'शुक्रेण ज्योतींषि समनुप्रविष्टः' इति अर्चा, 'प्रजापतिश्चरति गर्भे अन्तः' इति अन्तर्यामी चाभ्यधायिषतेति केचन व्याचक्षते। 'अम्भस्यपारे'

इत्यनेन एकार्णवशयो नाम विभवः, 'भुवनस्य मध्ये' इत्यनेन अर्चावतारश्च उक्त इति कश्चित्। 'भुवनस्य मध्ये' इत्यनेन प्राक्-ततत्तद्वस्तुसजातीयतामभिनयन् विभव एवोच्यत इत्यन्ये। यथा तथा वा भवतु, अत्र पञ्चापि रूपाण्युक्तानीति तु बहूनामभिमतम्। 'स वा एष पुरुषः पञ्चधा पञ्चात्मा—' इति वाक्यम् 'पञ्चधा = परव्यूहविभवान्तर्याम्यर्चावतारलक्षणभगवच्छास्त्रोक्तप्रकारेण विभक्तः' इत्येवं व्याचक्षाणेन उपनिषद्भाष्यकारेण सूचितसर्वजातीयकं व्याख्यानम्। तैत्तिरीयारण्यके 'भूः प्रपद्ये भुवः प्रपद्ये सुवः प्रपद्ये भूर्भुवःसुवः प्रपद्ये वायुं प्रपद्येऽनार्तां देवतां प्रपद्ये अश्मानमाखणं प्रपद्ये प्रजापतेर्ब्रह्मकोशं ब्रह्म प्रपद्य ओं प्रपद्ये' इत्यत्र 'अश्मानमाखणं प्रपद्ये' इत्यनेन शिलामयी अर्चा समभिहितेति बहुज्ञाः कथयन्ति। 'इदं पूर्णमदः पूर्णं पूर्णात्पूर्णमुद्रिच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥ सर्वं पूर्णं सहोम्' इति कठश्रुतिं प्रकारपञ्चकविषये प्रमाणयति श्रीलोकाचार्यः श्रीवचनभूषणे। एषा च श्रुतिरर्चावतारप्रकरणे व्याख्यास्यते। द्राविडाम्नायेऽपि "கடகில்" "அப்பால் முதலாய் நின்றவளப் பரியவாரமுது" "பாலாழிக் கிடக்கும் பண்பை யாங் கேட்டேயும்" "மண்மீதுழல்வாய்" "நின்றார் வணங்குஞ் சோதி" इति तत्र तत्र विप्रकीर्णतया, "விண்மீ திருப்பாய் மலைமேல் நிற்பாய் கடல் சேர்ப்பாய், மண்மீ துழல்வாய் இவற்றுளெங்கும் மறைந்துறைவாய்" इत्यत्र सामस्त्येन च पञ्चापि रूपाणि निर्दिष्टानीति तद्रहस्यविदः॥

---

1. 4 – 42 – 10.

तत्र परो नाम— अनादिनिधने अनवधिकानन्दसुन्दरे स्वयंप्रकाशे परमव्योमशब्दिते श्रीवैकुण्ठे श्रीभूमिनीलासमेतः, 'यत्र पूर्वे साध्याः सन्ति देवाः' 'यत्रर्षयः प्रथमजा ये पुराणाः' 'सदा पश्यन्ति सूरयः' इत्युक्तरीत्या नित्यैर्मुक्तैश्चाविशेषेण सेव्यमानः षाड्गुण्यपरिपूर्णो वासुदेवः । 'वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः । आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैः सह ॥' 'वैकुण्ठे तु परे लोके श्रीसहायो जनार्दनः । उभाभ्यां भूमिनीलाभ्यां सेवितः परमेश्वरः ॥' 'देवो वैकुण्ठनाथस्तु अनन्तासनसंस्थितः । सेव्यः श्रीभूमिनीलाभिः प्रादुर्भावैस्तथाखिलैः ॥' 'किमात्मिकैषा भगवतो व्यक्तिः? यदात्मको भगवान् तदात्मिका व्यक्तिः । किमात्मको भगवान्? ज्ञानात्मको भगवान् ज्ञानात्मिका व्यक्तिः' इत्यादिकमिह भाव्यम् । ते च षट् गुणाः ज्ञानबलैश्वर्यवीर्यशक्तितेजांसि । एतेषां च षण्णां गुणानामुपयोगः 'स्वतः सर्वं सर्वथा सर्वदा साक्षात्करोति, तथा साक्षात्कृतं च सर्वं धारयति, धारयन्नेव नियच्छति, धारयन्नियच्छंश्च अशिथिलो भवति, अघटितं च घटयति, तत्र च सहकारिनिरपेक्षो न केनचिदभिभूयते किंतु सर्वाभिभूर्भवति' इत्येवं तात्पर्यचन्द्रिकायां प्रदर्शितः । एतेषामेव विततयः सौशील्यादयः कल्याणा असंख्येया गुणाः । द्वये हि गुणा भगवतः — परत्वोपयोगिनः सौलभ्योपयोगिनश्चेति। परत्वं सौलभ्यं च समाश्रयणीयतायां प्रयोजकम् । 'तवानन्तगुण-

स्यापि षडेव प्रथमे गुणाः । यैस्त्वयेव जगत् कुक्षावन्येऽप्यन्तर्निवेशिताः' 'तथा गुणा ह्यनन्तस्य असंख्येया महात्मनः' 'प्रकृष्टं विज्ञानं बलमतुलमैश्वर्यमखिलं विमर्यादं वीर्यं वरद परमा शक्तिरपि ते । परं तेजश्चेति प्रवरगुणषट्कं प्रथमजं गुणानां निःसीम्नां गणनविधुराणां प्रसवभूः' इत्यादीन्यत्रानुसन्धेयानि । एते च प्रथमे गुणा यद्यपि भगवत्स्वरूपमाश्रयन्तः सर्वेष्वप्यवतारेषु भगवन्तं न जहत्येव ; अथापि कार्यानुरोधेन कदाचित्प्रकाशः कदाचिदप्रकाशश्च एषां गुणानामवतारान्तरेषु संभवति, पररूपे तु सर्वदा प्रकाश इत्येव भावनीयम । तथा चोच्यते — 'संपूर्णषड्गुणस्तेषु वासुदेवो जगत्पतिः' 'पूर्णस्तिमितषाड्गुण्यो निस्तरङ्गार्णवोपमः । षण्णां युगपदुन्मेषाद्गुणानां स्वप्रचोदितात् । अनन्त एव भगवान्वासुदेवः सनातनः' इति । विग्रहश्च भगवतः स्वरूपाद्भिन्न इति सर्वार्थसिद्धौ नायकसरे निरूपितम्* । स्तोत्ररत्नभाष्येऽपि स्फुटमिदम् । 'एतेन परकालयोगिनां भगवद्विग्रहे स्वरूपतादात्म्यवादो जडत्वादिभ्रान्तिमात्रनिराकरणार्थः । न त्वभेदे तात्पर्यमिति सूचितम । अतो भगवद्विग्रहः सर्वोऽपि ज्ञानानन्दैकलक्षणः स्वरूपाद्भिन्नश्च' इति 'वि-

* "निर्दिष्टं पौष्करादौ —" इति श्लोकव्याख्यायाम् "यत्तु कश्चिदुच्यते नित्यं निष्कलं निर्विकारं च परं ब्रह्म [illegible] स्वरूपत, एव विचित्रविग्रहाकारम्, तत एव विग्रहानित्यत्वम् । न चात्र स्वरूपविग्रहयोर्भेदो नापि भेदाभेदप्रसङ्ग इति, न तद्भावनीयम् । अन्यथा विश्वाद्वैतस्यापि संग्राह्यत्वप्रसङ्गादिति" इति प्रतिपादितम् ।

श्रातिशायिसुखरूप — इति वरदराजपञ्चाशत्पद्यव्याख्यायां श्री-शैलश्रीनिवासाचार्याः ॥

**व्यूहो नाम**— पररूपादुत्पन्नं रूपान्तरम्, तद्विशिष्टो भगवान्वा । स च वासुदेवः, संकर्षणः, प्रद्युम्नः, अनिरुद्ध इति चतुर्धा भवति । एतेषामेव वैखानसशास्त्रेषु पुरुष सत्य अच्युत अनिरुद्धपदैर्व्यपदेशः । सर्वेषु चावतारेषु प्रभोरिच्छैव नियामिका । साधुपरित्राणादिकमेव फलम् । अत्र च प्रथमो व्यूहो गुणादिभिर्न पररूपात्स्वात्मयापि भिद्यते । अत एव परवासुदेव इति व्यूहवासुदेव इति च व्यवहरन्ति । प्रथमस्य नित्योदित इति, द्वितीयस्य शान्तोदित इति च सांप्रदायिको व्यपदेशः । उभयोश्च संकल्पः क्रमेण नित्यविभूतेर्लीलाविभूतेश्च निर्वाहक इत्याहुः । 'नित्योदितात्संबभूव तथा शान्तोदितो हरिः' इति भगवच्छास्त्रे । परव्यूहयोर्वासुदेवयोरविशेषाभिप्रायेण च तत्र तत्र त्रिव्यूहपक्षोऽपि प्रथते । अत्र वासुदेवे परवत् षडपि गुणाः प्रकाशन्ते । वासुदेवादुत्पन्ने संकर्षणे ज्ञानं बलमिति द्वौ गुणौ प्रकाशेते । गुणान्तराणि तु चत्वारि अनभिव्यक्तानि सन्ति । एवं प्रकाशनमप्रकाशनं च तत्तद्रूपमुपासीनाननुगृह्णाति । अयं च जीवतत्त्वमभिमन्यते, शास्त्रं प्रवर्तयति, संहरति च जगत् । प्रद्युम्नश्च संकर्षणात्समुपद्यते । अस्य चाभिव्यक्तौ गुणौ — ऐश्वर्यं वीर्यं च । अयं च मनस्तत्त्वाभिमानी । अस्य च कर्म, धर्मप्रवर्तनं सृष्टिश्च । संकर्षणादुत्पद्यमानेन च अनिरु-

द्धेन शक्तितेजसी परं प्रकाश्येते। अयं चाहंकारतत्त्वमभिमन्यमानः पालयति जगत्, तत्त्वं च बोधयति। तदेतत्सर्वम्, 'गुणैः षड्भिस्त्वेतैः प्रथमतरमूर्तिस्तव बभौ ततस्तिस्रस्तेषां त्रियुग युगलैर्हि त्रिभिरसुः।' इति, 'षाड्गुण्याद्वासुदेवः पर इति स भवान्मुक्तभोग्यो बलाढ्यो बोधात्संकर्षणस्त्वं हरसि वितनुषे शास्त्रमैश्वर्यवीर्यात्। प्रद्युम्नः सर्गधर्मौ नयसि च भगवन् शक्तितेजोऽनिरुद्धो बिभ्राणः पासि तत्त्वं गमयसि च तथा व्यूह्य रङ्गाधिराज॥' इति च श्रीमिश्रभट्टाभ्यां संजगृहे। अस्य च चातुर्व्यूह्यस्य जाग्रत्स्वप्नादिस्थानभेदः, युगभेदेन वर्णपरिवृत्तिरित्यादिकं सप्रमाणं श्रीसारास्वादिन्यादिषु द्रष्टव्यम्। एभ्य एव समुत्पन्नाः केशवादयो मार्गशीर्षादीनां मासानां द्वादशानामादित्यानां च निर्वाहकाणि व्यूहान्तराणि॥

**विभवो नाम** — ईषद्भेदेन[1] भगवच्छास्त्रे तत्र तत्र निर्दिश्यमानः पद्मनाभादिकः। तत्तत्सजातीयसंस्थानतया सौलभ्यातिशयसमाश्रयणीयतासौकर्याद्यनुरोधेन मत्स्यकूर्मादिदशकं विभव इति क्वचिद्विशिष्य निर्देशः। रामकृष्णाद्यवतारेषु च तत्तत्कार्यानुसारेण गुणप्रकाशनतिरोधानादिकमुपपद्यत इति न तत्र प्राकृतत्वशङ्का कर्तुमुचिता। 'समस्तशक्तिरूपाणि तत्करोति जनेश्वर। देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वमायया' इति हि पराशरो बोधयति। विभ-

1. क्वचित् षट्त्रिंशदिति, क्वचित् अष्टात्रिंशदिति, क्वचित् एकोनचत्वारिंशदिति संख्याभेदः समुपलभ्यते।

वान्तराणि तदवान्तरभेदाश्चानन्तानि । अत एव 'कृष्णरूपाण्यसंख्यानि' इत्युच्यते । अत्राधिक त्वन्यतोऽवगन्तव्यम् ॥

**हार्दो नाम** — सर्वेषामपि हृत्पद्मकर्णिकामध्यगतः सूक्ष्मो रूपविशेषः । अयमेव 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' 'य एषोऽन्तर्हृदय आकाशः' 'सर्वस्य चाहं हृदि संनिविष्टः' इत्यादिभिरुच्यते । अस्य च 'अन्तर्यामी' इति नामान्तरम् । औपनिषदात्सर्वान्तर्यामिणो दिव्यात्मस्वरूपादपर एवायमन्तर्यामी । दिव्यात्मस्वरूपं हि सर्वगतत्वात् हृत्पद्मकर्णिकामध्यगतमपि भवति । दिव्यात्मस्वरूपस्यान्तः प्रविश्य नियन्तृतयान्तर्यामिव्यपदेशार्हत्वेऽप्यवतारविशेष एवान्तर्यामिनमाख्या निर्दिश्यते । पररूपपरिणामोऽयं हार्दः 'अष्टाङ्गयोगसिद्धानां हृद्यागनिरतात्मनाम् । योगिनामधिकारः स्यादेकस्मिन् हृदयेशये' इत्युक्तरीत्या सर्वान्तर्यामि दिव्यस्वरूपमनुसंधित्सूनां द्वारमिति अयमन्तर्यामिशब्देन व्यपदिश्यते । अयं च 'अन्तर्यामिस्वरूपं च सर्वेषां बन्धुवत्स्थितम्' इत्यारभ्य, 'स्वर्गनरकप्रवेशेऽपि बन्धुरात्मा हि केशवः' इत्यन्तेन स्तूयत इति वदन्ति ॥

**अर्चा नाम** — उपासकमनुजिघृक्षता तत्प्रार्थनामनुरुन्धानेन परेण व्यूहेन विभवेन वा बिम्बानुरूपमात्मशरीरं कलयता स्वयं प्रविश्य अविभागेन एकीकृत उपासकाभिमतसुवर्णादिनिर्मितो विग्रहविशेषः । प्रतिमाद्रव्याणि च स्कान्दे — 'रत्नजा हेमजा चैव राजती ताम्रजा तथा । रैतिकी वा तथा लौही शैलजा द्रुमजा तथा ।

अधमाधमा विज्ञेया मृन्मयी प्रतिमा च या ' इति कथितानि । 'यार्चा मृद्दारुमभूता सायुःश्रीबलदा मता । सौवर्णी पुष्टिदा ज्ञेया ताम्रजा जनवर्धिनी । महत्करोति भूलाभं यार्चा पाषाणनिर्मिता ' इति काश्यपः । प्रतिमाद्रव्यतन्निर्माणप्रतिष्ठापूजाफलादिकं मात्स्य पाद्म भविष्य ब्राह्म नारसिंह आदित्य अग्नि पुराणेषु संग्रहविस्तराभ्यानेकरीतिकमुपलभ्यते । 'बिम्बाकृत्यात्मना बिम्बे समागत्यावतिष्ठते ' इति सात्वतसंहिता । अस्यार्थः . 'बिम्बः = आराधकैर्यथारुचि सुवर्णरजतादिनिर्मिता प्रतिमा, तस्य आकृतिरिव आकृतिर्यस्य सः बिम्बाकृतिः स चासौ आत्मा चेति कर्मधारयः । अत्र आत्मशब्दो विग्रहपरः । बिम्बसदृशविग्रहेणेत्यर्थः । बिम्बे = प्रतिमायाम् । समागत्य = समित्येकीकारे नीरक्षीरवदविभागेन संश्लेषं प्राप्येत्यर्थः ' इति साक्षात्स्वामिभिरभिहितः । अयं प्राकृतभागः, अयमप्राकृतभाग इति विभज्य ज्ञातुं यथा न शक्येत, तथा परव्यूहविभवा बिम्बानुरूपेण शरीरेण तत्र बिम्बे एकीभूय संनिदधतीत्युक्तं भवति । 'स्वयंव्यक्तदेवार्षादयस्त्वर्चावतारभेदाः । देवादिष्वपि विशिष्टप्रतिष्ठानन्तरं प्रसादोन्मुखेश्वरसंकल्पाधीनमप्राकृतत्वमनुसंधेयम् ' इति न्यायसिद्धाञ्जने श्रीमदाचार्याः । 'अर्चकस्य (स्थापकस्य) तपोयोगात्पूजायाश्चातिशायनात् । आभिरूप्याच्च बिम्बस्य नित्यं संनिहितो हरिः ' इति भगवच्छास्त्रे । प्राकृताप्राकृतसंसर्गोऽपि नानुपपन्नः । अन्यथा प्राकृतलोकेषु भगवदवतारानुपप-

तिप्रसङ्ग इति श्रीनिगमान्तगुरुः । “ नानारूपेष्वपि व्यूहविभवा-र्चावतारेषु अप्राकृतशुभाश्रयत्वादिकम् ‘ समस्ताः शक्तयश्चैताः—’ ‘ समस्तशक्तिरूपाणि —’ ‘ दिव्याकृत्यात्मना बिम्बे समागत्याव-तिष्ठते ’ ‘ अर्चापि लौकिकी या सा भगवद्भावितात्मनाम् । मन्त्र मन्त्रेश्वरन्यासात्सापि षाड्गुण्यविग्रहा ’ इत्यादिभिरुच्यते । परव्यू-हादिविग्रहवत् तत्तद्विग्रहानुप्रवेशात् अर्चापि षाड्गुण्यप्रकाशकशुद्ध-सत्त्वमयीत्यर्थः ” इति गद्यभाष्ये । ‘ स्वमेव रूपं तत्तत्सजातीयसं-स्थानं स्वस्वभावमजहदेव कुर्वन् तेषु तेषु लोकेष्ववतीर्यावतीर्य ’ इति गीताभाष्यम् । स्वमेव रूपमित्युक्त्या अवतारविग्रहस्याप्यप्राकृ-तपरमपदनिलयविग्रहांशविशेषत्वं दर्शितमिति, नैष गर्भत्वमापेदे न योन्यामवसत्प्रभुरित्यादिकमप्येतदुत्तम्भकमिति, अजोऽपि सन् इति वक्ष्यमाणानुसंधानेन स्वस्वभावमजहदेवेत्युक्तमिति च तत्र ता-त्पर्यचन्द्रिका । एतदुभयमत्रापि भावनीयम् । परवत् व्यूहविभवावपि हि बिम्बं संश्लिष्यतः । श्रीवत्साङ्कमिश्रा अपि ‘ परो वा व्यूहो वा विभव उत वार्चावतरणो भवन्वान्तर्यामी वर वरद यो यो भवसि वै । स स त्वं सन्नैशान्वरगुणगणान् बिभ्रदखिलान् भजद्भ्यो भा-स्येवं सततमितरेभ्यस्त्वितरथा ’ इत्याहुः । एतेन अवतारेषु प्राकृत-स्पर्शेन भगवतः सावद्यत्वं वदन्तः परास्ताः ; अकर्मकृतस्वेच्छामा-त्रमूलकाप्राकृतज्ञानानन्दैकलक्षणनिरवद्यदिव्यविग्रहशालिनः श्रियः श्रियः स्वरूपत एव हेयप्रत्यनीकत्वात् । कर्मकृतविग्रहपरिग्रहो हि

कस्यचिदुत्कर्षमपकर्षं वा संपादयिष्यति। भगवान् किल अजायमान एव बहुधा विजायते। एतदभिप्रायेणैव 'न कर्मणा वर्धते नो कनीयान्' 'स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान्' इत्याद्याः श्रुतयः प्रवृत्ताः। 'युवा सुवासाः परिवीत आगात्स उ श्रेयान् भवति जायमानः—' इति श्रुतिश्च अजायमानस्य जायमानत्वमुत्कर्षमभिदधातीत्यलं दिष्टहतोपरि मुद्गराभिघातेन॥

अयं चावतारः सर्वोत्तर इति सारविदां निष्कर्षः। 'स्वरूपाद्विग्रहस्य सुखानुसंधेयतया सौलभ्यमधिकम्; तस्मादप्यर्चावतारस्य भक्ताभिमतसर्वदेशकालसंनिधायितया परव्यूहादिभ्योऽधिकतमम्। तदा काष्ठाप्राप्तं परत्वमपि तत्र भक्तोपलभ्यं शास्त्रादवसेयम्' इति गद्यभाष्ये आचार्यचरणाः। 'अर्चावतारः—चेतनानामभिमतेषु द्रव्येषु विभवविशेषवैलक्षण्येन देशकालाधिकारिनियमं विना अपराधानपश्यतोऽर्चकपराधीनसमस्तव्यापारवत आलयेषु गृहेषु च स्थितिः। रुचिजनकत्वं शुभाश्रयत्वम् अशेषलोकशरण्यत्वम् अनुभाव्यत्वं चेति सर्वमिदमर्चावतारे परिपूर्णम्। स्वस्वामिभावं व्यत्यासयन् अज्ञ इवाशक्त इव अस्वतन्त्र इव च स्थित एव अपारकारुण्यपरवशः सर्वमपेक्षितं ददाति' इति तत्त्वत्रये, "गुणपूर्ण एव विषय इति विषयनियमः। गुणपूर्तिश्च अर्चावतारे। दिव्यसूरयश्च स्वगाथासु बहुत्र अर्चावतारमेव प्रपद्यमाना दृश्यन्ते। 'पूर्णम्' इत्युक्त्या अर्चावतारे सर्वे गुणाः पुष्कलाः। प्रपत्त्युपयोगिनश्च सौ-

लभ्यादयो गुणा अन्धतमसावृते अपवरके दीप इव अर्चावतार एव प्रकाशन्ते । स्वकीयां परिपूर्णतां स्वातन्त्र्यं च परिहृत्य, आत्मानमनादृियमाणानपि जनान् स्वयमादृियते अर्चावतारः” इति श्रीवचनभूषणे च लोकाचार्याः । एतदुक्तं भवति— समाश्रयणीयतायाश्च प्रयोजकं परत्वं सौलभ्यं चेत्यविवादम् । परत्वं च ‘सर्वातिशायि षाड्गुण्यं संस्थितं मन्त्रबिम्बयोः । मन्त्रे वाच्यात्मना नित्यं बिम्बे तु कृपया स्थितम्’ इति संहितावचनेन अध्यवस्यामः । ‘यथोपयोगं शक्यत्वात्कर्तुं पुष्पादिपूजनम् । चक्षुषः प्रीतिकरणान्मनसो हृदयस्य च । प्रीत्या संजायते भक्तिर्भक्तस्य सुलभो हरिः । तस्मात्त्रयाणामेतेषां बेरपूजा विशिष्यते’ इति वैखानसक्रियाधिकारवचनेन च सौलभ्यमधिकमवगच्छामः । अतश्च पूर्णत्वकाष्ठारूढसौलभ्याभ्यां सर्वेषामपि प्रबुद्धाप्रबुद्धसाधारण्येन समाश्रयणीयोऽयमर्चावतार इति । एतत्सर्वमभिप्रेत्यैव ‘एवं पञ्चप्रकारोऽहमात्मनां पततामधः । पूर्वस्मादपि पूर्वस्माज्ज्यायांश्चैवोत्तरोत्तरः । सौलभ्यतो जगत्स्वामी सुलभो ह्युत्तरोत्तरः’ इति विष्वक्सेनसंहितावचनं प्रववृते । परव्यूहादिषु सत्यपि सौलभ्ये, तस्य विश्रान्तिभूमिरर्चावतार एवेति वचनस्य वर्तुलार्थः । अर्चावतारस्य च सर्वातिशायि सौलभ्यमित्यभिप्रायेण “தமருகந்ததெவ்வுருவமவ்வுருவம தானே தமருகந்ததெப்பேர மற்றப் பேர தமருகந்து எவ்வண்ணம சிந்தித்திமையாதிருப்பரே அவ்வண்ண மாழியானாம்” इत्येवं कासारयोगी गायति । आश्रितवत्सलो भगवान्

आश्रितानामभिमतं सुवर्णरजतादिनिर्मितं विग्रहं नामधेयं गुणान् चेष्टितानि च स्वीकरोतीति गाथायाः पिण्डितार्थः । श्रीशठकोपयोगिनापि “அஞ்சி நீருலகத்துள்ளீர்காள் அவனிவனென்று கூழேன்மின் நெஞ்சினால் நினைப்பான் யவனவனாகும் நீள்கடல்வண்ணனே” इति श्रीसूक्तावयमभिप्रायः प्रकटितः । अयं चाशयस्तत्र व्याख्यातृभिः स्फुटीकृतः । भगवतः शठकोपसूरेरियं गाथा ‘हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति’ इति तैत्तिरीयश्रुतेर्विवरणं भवति । ‘हृदेति । हृदिति भक्तिरुच्यते, हृत्संबन्धिज्ञानविशेषत्वात् भक्तेः । मनीषा मनस ईषा । लाङ्गलदण्डो यथा लाङ्गलसंबन्धाल्लाङ्गलीषा, तथा बुद्धिर्मनःसंबन्धात् मनीषा ईप्सितार्थे निश्चलावस्थानम् । सुपां सुलुगिति तृतीयाया आकारः । तया इत्थंभूतेन मनसा अभिक्लृप्तः अभिनिष्पाद्यो भवेत् । यत्स्वरूपो यद्रूपो यद्गुणो यद्विभूतिको यत्प्रमाणको यद्रव्योऽयं सर्वेश्वरः कल्प्यते, स तथा भवेदिति भावः । तथा च गीतोपनिषत्—ये यथा मां प्रपद्यन्ते—’ इति कूरनारायणमुनयो व्याचख्युः । भगवतापि स्वसौलभ्यमभिव्यञ्जयता एवं गीयते—‘ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः’ इति । ‘एवं साधुपरित्राणाद्यर्थदेवमनुष्यादिसजातीयस्वेच्छावतारवर्णनमुखेन उपासनोपयुक्तं स्वस्य सौलभ्यमुक्तम् । अथ तस्यैव काष्ठाप्राप्तां दशां दर्शयति—ये यथा इति श्लोकेन । अत्र कृष्णावतार-

वृत्तान्तेन सह अर्चावतारवृत्तान्तोऽपि संगृहीतः' इति तात्पर्यच-न्द्रिका। यादृशरूपादिविशिष्टतया मामुपासितुं भक्ता वाञ्छन्ति, तादृशरूपादिकं तदभिमतं स्वयं परिगृह्य तेषामभिमतं साधयामि। आश्रिताभिप्रायानुवर्तिनो मम तेषां च ऐकमत्यात् द्वैधाभावेन तेऽपि मन्मार्गानुसारिणः संपद्यन्त इति श्लोकस्याखण्डार्थः। इदमत्रानुसं-धेयम्—अर्चारूपी खलु भगवान् स्वयमवाप्तसमस्तकामोऽपि अत-थाभूत इव सन् आश्रितैर्भक्त्या दीयमानं पत्रपुष्पफलतोयादिकं स्वी-कृत्य तृप्यति, स्वाधीनस्वव्यतिरिक्तसमस्तवस्तुस्वरूपास्थित्यादिकोऽ-पि अर्चकैः क्रियमाणमात्मनः स्वरूपस्थित्यादिकमङ्गीकरोति, स्वयं निरुपाधिकस्वाम्यपि स्वमिव भवन्, मदीयः कृष्णः मदीयो राम इति अर्चकैरभिमन्यमानो गृहक्षेत्रादिवद्दायविभागार्हो भवति। उप-चारापदेशेन अस्माभिः क्रियमाणमपचारं सर्वमपि सहमानः, केव-लमव्याजेन कारुण्येन आश्रितमनोरथानुसारेण कुटीकुञ्जादिष्वपि वसन् तेषामखिलमपि भद्रं संपादयतीति दूरे गिरामर्चावतारस्य सौलभ्यातिशय इति। तथा च संहिता—'तदिच्छया महातेजा भुङ्क्ते वै भक्तवत्सलः। स्नानं पानं तथा यात्रां कुरुते वै जगत्पतिः। स्वतन्त्रः स जगन्नाथोऽप्यस्वतन्त्रो यथा तथा। सर्वशक्तिर्जगद्धाता-प्यशक्त इव चेष्टते। सर्वान्कामान् ददत्स्वाम्यप्यशक्त इव लक्ष्यते। अपराधानभिज्ञः सन् सदैव कुरुते दयाम्। ममायं वामनो नाम नारसिंहाकृतिः प्रभुः। वराहवेषो भगवान् नरो नारायणस्तथा।

ममायं राम इत्येव देवः परशुलाञ्छनः । मद्ग्रामवासी भगवान्ममैवेति च धीर्भवेत् । तथा कृष्णश्च रामश्च ममायमिति निर्दिशेत् । चिन्तयेच्च जगन्नाथं स्वामिनं परमार्थतः । अशक्तमस्वतन्त्रं च रक्ष्यं चापि जनार्दनम् ' इति । अयं चार्चावतारस्यापरो विशेषः —यदुत परःशतैरपि शास्त्रोपदेशैरनिवर्तनीयं विषयान्तराभिनिविष्टानां चेतनानां परमात्मनि वैमुख्यम् ' रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणम् ' इत्युक्तदिशा स्वसौन्दर्यादिभिर्दूरतः परिहृत्य, सद्य एव स्वस्मिन् रुचिजननं नाम । इदं चाप्रबुद्धानामप्यनुभवसाक्षिकम् । एतेन अनुभाव्यत्वमपि व्याख्यातम् । तथा च विष्णुपुराणे कंसप्रेरितस्य अक्रूरस्य ' चिन्तयामास चाक्रूरो नास्ति धन्यतरो मम । योऽहमंशावतीर्णस्य मुखं द्रक्ष्यामि चक्रिणः । अद्य मे सफलं जन्म सुप्रभाता च मे निशा । यदुन्निद्राब्जपत्राक्षं विष्णोर्द्रक्ष्याम्यहं मुखम् । पापं हरति यत्पुंसां स्मृतं संकल्पनामयम् । तत्पुण्डरीकनयनं विष्णोर्द्रक्ष्याम्यहं मुखम् ' इत्युत्कण्ठोक्तिः । ' संकल्पनामयम् अदितिदेवक्याद्याराधनसंकल्पानुरूपं हि भगवतो देवमनुष्यादिसजातीयमिदं रूपम् । इदं विभवार्चावतारसाधारणम् । यथाह— ये यथा मां प्रपद्यन्ते– इति । हृदयोपासनेऽपि उपासकसंकल्पाधीनाङ्गप्रत्यङ्गरूपादिमत्त्वमुक्तम् — हृदि संकल्प्य यद्रूपमित्यादिना ' इति श्रीविष्णुचित्तार्याः । " என்னமுதினைக் கண்ட கண்கள் மற்றொன்றினைக் காணாவே " इति मुनिवाहनोक्तिरप्यत्र भाव्या । परस्य परमपदे असा-

धारणेन विग्रहेण अवस्थितिः ; व्यूहेऽपि तथा, विभवेऽपि तत्तत्संस्थानसजातीयसंस्थानादरणम् ; अर्चायां तु अर्चकाभिमत एव स्वाभिमतो विग्रह इत्यन्योऽप्ययमर्चावतारस्य सौलभ्यप्रकर्षः । किंच अर्चावतारदर्शनेन चेतनानां पापादीनि नश्यन्तीत्यपरो गुणः । तथा च स्मर्यते— आ पीठान्मौलिपर्यन्तं पश्यतः पुरुषोत्तमम् । पातकान्याशु नश्यन्ति किं पुनस्तूपपातकम्' इति । श्रीपौष्करे चार्चावतारप्रकरणे— 'संदर्शनादकस्माच्च पुंसां संमूढचेतसाम् । कुवासना कुबुद्धिश्च कुतर्कनिचयश्च यः (कुतर्कश्च कुनिश्चयः) । कुहेतुश्च कुभावश्च नास्तिकत्वं लयं व्रजेत्' इति । एवमनन्ता विशेषा अर्चावतारस्य तत्र तत्रोक्ताः स्वयमप्यूह्याः । सर्वज्ञो भगवानेव 'अर्चावताराविषये मयाप्युद्देशतस्तथा । उक्ता गुणा न शक्यन्ते वक्तुं वर्षशतैरपि' इति स्वयमाह । एवमर्चावतारस्य निरायासं विना च विलम्बं मोक्षप्रदत्वम् 'सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम् । कृत्वात्मनः प्रीतिकरीं सुवर्णरजतादिभिः ॥ तामर्चयेत्तां प्रणमेत्तां यजेत्तां विचिन्तयेत् । विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणाम्' इति भगवान् शौनक आह । अयं भावः— शुभाश्रयचिन्तनं हि मोक्षाय कल्पत इति, शुद्धसत्त्वमय एव विग्रहो हेयप्रातिभटः सन् मुमुक्षूणामुपास्यो भवतीति च सर्वसंप्रतिपन्नम् । अर्चाविग्रहश्च न केवलं परिदृश्यमानः प्राकृत एव ; किं तु 'बिम्बाकृत्यात्मना—' 'पञ्चोपनिषदात्मानं दिव्यमङ्गलविग्रहम् । स्वामिन् लक्ष्मीश भग-

त्रन् संनिधत्स्व स्वविग्रहम्' इत्युक्तरीत्या अप्राकृतविग्रहविशिष्टवेषेण भगवता अधिष्ठाय नीरक्षीरवद्विभागवर्जमात्मना सहैकीकृतस्तत्सं-श्लेषविशेषेण स्वयमपि अप्राकृतः शुभाश्रयो विग्रह एव। तस्य च मुमुक्षूपास्यत्वमाञ्जस्येनोपपद्यते। एवं चायमर्चावतारविग्रहः, चार्मणयोरपि चक्षुषोर्विषयीभवन्, प्रदक्षिणप्रणामार्चनादिसौकर्यातिशयेन परव्यूहादीनतिवर्तमानस्तत एव तेभ्यः सुदूरमुत्कृष्यमाणः, स्वोपासकानामप्रयासमपवर्गमप्यापादयतीति। 'विगतपास्तदोषस्तु तामेव ब्रह्मरूपिणीम्' इत्यर्धमेवं सारास्वादिन्यां व्याख्यातम्— "तामेव विशति अर्चनप्रणामादिविषयभूतां तामाप्नोत्येव, न तु तां जहाति, तत्क्रतुन्यायादिति भावः। कथमस्या लौकिकार्चायाः प्राप्यत्वमित्यत्राह— ब्रह्मरूपिणीमिति। ब्रह्मशब्दोऽत्र 'मूर्तं ब्रह्म' इत्याद्युक्तपरविग्रहपरः, तद्रूपिणीं तत्स्वरूपां तदभिन्नामिति यावत्। तदुक्तं तात्पर्यचन्द्रिकायां चतुर्थाध्याये— 'अर्चावताररूपेऽपि परत्वानुसंधानं दर्शितम्। यथा स्मरन्ति— तामेव ब्रह्मरूपिणीमिति' इति। अत्र नीरक्षीरवदेकीभावाभिप्रायेण ब्रह्मरूपिणीमित्यभेदोपचारः। तथा च पररूपेण संश्लेषविशेषादर्चाया अपि प्राप्यत्वं युज्यत इति भावः। व्यूहविभवयोरपि पररूपपरिणामत्वेन तदभिन्नत्वात् सर्वस्याप्यर्चावतारस्य ब्रह्मरूपिणीमिति पररूपाभेदोक्तिर्युज्यत इति ध्येयम्" इति। अत्र 'अतिसुन्दरनित्यविग्रहेण भगवतः परत्वानुसंधानं तत्सांनिध्यकारणमिति च तत्रोक्तम्— नित्यसिद्धे—

इति ' इति गद्यभाष्यम्, ' व्यूहविभवाद्यवस्थास्वपि हेयप्रत्यनीकत्वा-
नन्दावहत्वमुमुक्षूपास्यत्वप्राप्यत्वादिस्वभावापरित्यागोऽभिहितः ' इ-
ति तात्पर्यचन्द्रिका, ' एषु सर्वेषु भगवतो विग्रहेषु सांसारिकफल-
प्रदान एव मात्रया तारतम्यम् । निःश्रेयसं तु व्यापकानुसंधायिनां
सर्वत्र हस्तापचेयम् । यच्च— विभवार्चनात् व्यूहं प्राप्येत्यादि, तत्
व्यापकानुसंधानविधुराधिकारिविशेषापेक्षयेति मन्तव्यम् ' इति न्या-
यसिद्धाञ्जनं चानुसंधेयानि । इत्थं च, अपरिच्छिन्नस्य भगवतः
प्रतिमापरिच्छेदेन भावनम् अशरीरितया श्रूयमाणस्य शरीरकल्पनं
चासंगतमिति प्रत्यवस्थानं संप्रदायज्ञानगन्धविधुराणामज्ञानां गो-
ष्ठीमात्रहृद्यमिति बोध्यम् । एवमतिशयितं सौलभ्यमर्चावतारे वि-
द्यमानमेव ' अर्चावतारः सर्वेषां बान्धवो भक्तवत्सलः ' इति सं-
हितावचनमासूत्रयति । इत्थं चार्चावतारस्य पररूपाभिन्नतया विभवे-
ष्विव अत्रापि सर्वज्ञत्व सर्वशक्तित्व परमकारुणिकत्वादीनां कल्या-
णगुणानामनुवृत्तिरस्त्येव । परं तु ' भजन्त्यो भास्येवम्— ' इत्यु-
क्तरीत्या भगवति निरतिशयप्रेमशालिनां महापुरुषाणामेव ते सा-
क्षात्कारगोचरा भवन्ति । अतश्च श्रीदेवाधिराजस्य काञ्चीपूर्णस्य च
संवादश्चिराय प्रसिद्धो न नाम नोपपद्यते । गद्यपरामर्शे च लक्ष्मी-
पतियतिपत्योः संवादः समजनीति हि ज्ञायते । तथा च ' लक्ष्मी-
पतेर्यतिपतेश्च दयैकधाम्नोर्योऽसौ पुरा समजनिष्ट जगद्धितार्थम् ।
प्राप्यं प्रकाशयतु नः (वः) परमं रहस्यं संवाद एष शरणागतिम-

न्वसारः’ इति, ‘इति शरणागतिगद्यं यतीशरङ्गेशसंलपनरूपम्’ इति च पृथुगद्यभाष्ये श्रीवेङ्कटनाथसूरिः। स्तोत्ररत्नमपि भगवतोः रङ्गराजयामुनेययोः प्रायेण संवाद एवेति महतां विमर्शः। ‘सौशील्यभावितधिया भवता कथंचित्संछादितानपि गुणान् वरद त्वदीयान्। प्रत्यक्षयन्त्यविकलं तव संनिकृष्टाः पत्युस्त्विषामिव पयोदवृतान्मयूखान्’ इति वरदराजपञ्चाशत्पद्येनापि अयमेवाशयः क्रोडीकृतः। “*தஞ்சமாகிய தந்தை*—” इति गाथाव्याख्याने ‘प्रतिमास्वप्रबुद्धानाम् *என்னும் ரிஷிகளைப்போலே தம்வாயால் சொல்லாட்டாமையாலே அவனிவனென்கிறார்*’ इति कृष्णपादसूरिः। “*அவனிவனென்று அர்ச்சாவதாரத்தை சேதநனுக்குச் சொன்னது— அர்ச்சாவதாரத்திற்கு மூசுகண்டெனறிருக்குமவராகையாலே என்கிறார்*— प्रतिमास्वप्रबुद्धानामित्यादि’ इति तत्र व्याख्यातारः। इत्थं च अप्रबुद्धाधिकारिकं प्रतिमापूजनमिति दुराक्षेपोऽपि निरस्तः। ‘सर्वत्र समदर्शिनाम् (विदितात्मनां)’ इत्युत्तरवाक्यानुरोधेन प्रतिमास्वेवेत्यवधारणगर्भतया व्याख्यातव्यत्वेन शङ्काया एवानवकाशात्। यथा च प्रबुद्धा अप्यत्र अधिकारिणः, तथा उपरिष्टात्प्रपञ्चयिष्यते। ये पुनरीदृशमर्चावतारं केवलां प्रतिमां मन्यन्ते, ते नूनं प्रत्यवयन्त्येव। तथा च स्मर्यते— ‘यो विष्णोः प्रतिमाकारे लोहबुद्धिं करोति च। यो गुरौ मानुषं भावमुभौ नरकपातिनौ’ इति। ‘भगवतीयेषु वस्तुषु स्वीयत्वबुद्धिः, अर्चावतारपर्यन्तेषु अवतारेषु प्रा-

कृतत्वबुद्धिरित्यादयोऽपि भगवदपचाराः ' इति गद्यभाष्ये आचार्याः। यदप्युच्यते—' न तस्य प्रतिमा अस्ति ' इति श्रुत्या भगवतः प्रतिमा निषिध्यत इति, तदपि सर्वात्मना अव्युत्पन्नस्य बालिशस्य भाषितम्। ' यस्य नाम महद्यशः ' इत्युत्तरत्र निःसमत्वे हेतुप्रदर्शनेन अत्रत्यः प्रतिमाशब्दः सदृशपर्यायो ह्यवगम्यते। एवमेव खलु तत्र उव्वटो महीधरश्च बभाषाते। श्वेताश्वतरेऽपि श्रूयमाणा इयम् ऋक् एवमेव रङ्गरामानुजमुनिभिरपि व्याचख्ये। अतश्चायमाक्षेपः प्रज्ञाहीनस्येत्यलमन्यतोगमनेन। प्रकृतमनुसरामः। एवमवतारान्तरापेक्षया अर्चावतार एव सर्वगुणपरिपूर्तिरित्यमुमर्थम् ' इदं पूर्णम्— ' इति कठशाखाश्रुतिः प्रतिपादयतीति तत्रभवान् लोकाचार्यः। अत्र व्याख्यातारः—इयम् ऋक् कठश्रुतौ द्वयवाक्यखण्डद्वयमध्ये पठ्यते, द्वयोक्तोपायत्वोपेयत्वापेक्षितसौलभ्यादिगुणपूर्तिरनया प्रतिपाद्यते, ' उक्ता गुणा न शक्यन्ते ' इत्युक्तरीत्या पूर्णशब्दस्यासंकोचा प्रवृत्तिरत्र सिध्यति, ' पञ्चप्रकारोऽहम् ' इत्युक्ता पञ्चत्वसंख्या अत्र प्रत्यभिज्ञायते, ' पूर्वस्मादपि पूर्वस्मात् ' इति रीत्या उत्तरोत्तराधिक्यमत्र प्रतिपाद्यत इति लिङ्गसंनिधिभ्याम् ऋगियम् अर्चावतारे विश्राम्यति। " यदेवेह तदमुत्र " इत्यादाविव इदमदःशब्दौ अन्तर्यामिपररूपवाचिनौ। इदम् = एतदन्तर्यामिरूपम्, पूर्णम् = कल्याणगुणपुष्कलम्। अदः = नित्यविभूतिस्थपरवासुदेवरूपम्, पूर्णम् = गुणैः पुष्कलम्। पूर्णात् = षाड्गुण्य-

पूर्णात्परवासुदेवात् अभिव्यक्तम्, पूर्णम् = व्यूहरूपम्, उद्रिच्यते = द्वाभ्यां द्वाभ्यां गुणाभ्यां बहुविधत्वं प्राप्नोति। पूर्णस्य = अनन्तावतारकन्दक्षीरपयोधिशायिव्यूहविशेषप्रादुर्भूतत्वात् व्यूहात्मकपूर्णसंबन्धि, पूर्णम् = कल्याणगुणपूर्णविभवरूपम्, आदाय = स्वहेतुत्वेन स्वीकृत्य, पूर्णमेव = सकलकल्याणगुणपरिपूर्णोऽर्चावतार एव, अवशिष्यते = नित्याश्रयणीयतया नित्यसंनिहितः सौलभ्यविश्रान्तिभूमिः सन् परत्वादिषु चरमतया अवतिष्ठते। ओम् = रक्षकत्वप्राप्यत्वविशिष्टे अर्चावतारे, सर्वम् = आश्रयणसौकर्यापादक आश्रितकार्यापादकसकलकल्याणगुणजातम्, सह पूर्णम् = मिलितं सत् पुष्कलमवलोक्यते। अनेन च परव्यूहयोः संभवन् कालसंनिकर्षः, विभवे देशकरणसंनिकर्षः, अन्तर्यामित्वे देशकालसंनिकर्ष इत्येतद्रूपं यत्सौलभ्यम्, तत्प्रभृतयः आश्रयणोपयुक्ता गुणाः, ज्ञानशक्त्यादयश्च कार्योपयुक्तगुणा इत्येवं पूर्वपठितपूर्ववाक्यस्थ नारायणपदोक्ताः सर्वेऽपि गुणा अर्चावतारे पुष्कला इत्युक्तं भवति॥

इदमेव च पूर्वपूर्वादुत्तरोत्तरे अवतारे उत्कृष्यमाणं सौलभ्यं सचमत्कारं निदर्शयति श्रीवचनभूषणकारः। तद्यथा—'भूगतजलमिव अन्तर्यामित्वम्, आवरणजलवत् परत्वम्, क्षीराब्धिना तुल्यो व्यूहः, वशिकतटिन्य इव विभवाः, तत्परीवाहजा ह्रदा इव अर्चावतारः' इति। इदं च वाक्यमेवं व्याचचक्षे श्रीरम्यजामातृमुनिः—"तृष्णार्तस्य जलार्थिनो जनस्य भूगतं सलिलं यद्यपि प्र-

त्यासन्नमेव, न च तदर्थं तेन देशान्तरं गन्तव्यम्; अथापि खननादिकं विना न तत्प्राप्तुं शक्यते। एवमेव दिदृक्षोर्हृदयस्थितः संनिहितोऽपि न खलु दृष्टिपथमवतरति अन्तर्यामीति अन्तर्यामित्वं भूगतजलतुल्यं भवति। अण्डाद्बहिर्भूतं जलं यथा तृष्णार्तस्य नोपयोगाय भवति, तथैव संसारिणो जनस्य लीलाविभूतेः परस्ताद्विद्यमानं परत्वं नानुभवाय कल्पते। यथा वा नातिविप्रकृष्टोऽपि अण्डान्तर्गतोऽपि क्षीराब्धिर्दुष्प्रापः, एवमेव केवलं श्रूयमाणो दर्शनस्य अविषयो व्यूहः। यथा च वशिकतटिन्यः प्रत्यासन्ना अपि प्रवाहकाले विद्यमानानामेव उपजीव्याः, न पश्चात्तनानाम्; तथैव भूमाववतीर्य संचरन्तोऽपि समकालिकानामेव आश्रयणार्हाः पश्चाद्भवानां दुर्लभा विभवाः। पूर्वोक्तविलक्षणाः तटिनीप्रवाहजा ह्रदा यथा पिबतां तादात्विकानां श्रममपनयन्तः पश्चाद्भाविनामप्युपयोगाय भवन्ति, तद्वत् आलयेषु गृहेषु च स्थितः देशकालकरणविप्रकर्षवर्जं तदातनैः साक्षात् सेव्यमानः भाविनामपि चेतनानामुपजीव्यः अर्चावतारः। 'भौमनिकेतनेष्वपि कुटीकुञ्जेषु' इत्युक्तदिशा अर्चावताराणां बहुत्वात् तदभिप्रायेण 'ह्रदा' इति बहुवचनम्। अवतारगुणानां सर्वेषामपि अर्चास्थलेषु परिपूर्णताम्, अवतारविग्रहाणामर्चात्मना बहुत्र परिग्रहं चाभिसंधाय 'तत्प्रवाहजा ह्रदा इव' इत्युक्तिः" इति ॥

'आस्तां ते गुणराशिवद्गुणपरीवाहात्मनां जन्मनां
संख्या भौमनिकेतनेष्वपि कुटीकुञ्जेषु रङ्गेश्वर ।
अर्च्यः सर्वसहिष्णुरर्चकपराधीनाखिलात्मस्थितिः
प्रीणीषे हृदयालुभिस्तव ततः शीलाज्जडीभूयते ॥'
इत्येकेन पद्येन अर्चावतारवैभवं संजग्राह भट्टारकः ॥

कवितार्किकसिंहश्च 'एषु परव्यूहप्रभृतिषु चित्तालम्बनेषु प्रपत्त्येकनिष्ठा नाथमुनिप्रभृतयः सुलभतमत्वेन परिपूर्णत्वाविशेषाच्च समाहितचित्तानामपि अनुसंधेयमर्चावतारमेव चेतसः शुभाश्रयमालम्बन्त' इति श्रीपाञ्चरात्ररक्षायामनुगृह्णातीति दिक् ॥

एतादृशस्य चार्चारूपिणो भगवतः समाराधनं नित्यम्. 'नित्यम्' इति कण्ठोक्तेः अकरणे प्रत्यवायश्रवणाच्च । तथा हि— कूर्मे तावत् 'न विष्ण्वाराधनात्पुण्यं विद्यते कर्व वैदिकम् । तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् ॥' इति पठ्यते । भगवता शौनकेनापि — 'शौनकोऽहं प्रवक्ष्यामि नित्यं विष्ण्वर्चनं परम्' इति नित्यत्वमुच्यते । 'स्नात्वा नित्यं शुचिः कुर्याद्देवर्षिपितृतर्पणम् । देवताभ्यर्चनं चैव समिदाधानमेव च' इति सामान्यतो ब्रुवन्मनुरपि अस्य नित्यत्वमभिप्रैति । 'स्नात्वा देवान् पितॄंश्चैव तर्पयेदर्चयेत्तथा' इति याज्ञवल्क्यवचनम् 'मध्याह्ने तर्पणानन्तरं गन्धकुसुमाक्षतैर्हरिहरहिरण्यगर्भप्रभृतीनामन्यतमं यथावासनम् ऋग्यजुःसाममन्त्रैस्तत्प्रकाशकैः स्वनामभिर्वा चतुर्थ्यन्तैर्नमस्कारयुक्तैराराध-

येत्' इति व्याचख्यौ विज्ञानेश्वरः। 'ब्रह्मचारी गृहस्थो वा वानप्र-स्थोऽथ भिक्षुकः। केशवाराधनं हित्वा नैव याति परां गतिम्' इति भारते पठ्यते। अकरणे प्रत्यवायश्च स्मर्यते—तथा च कूर्मे—'यो मोहादथवालस्यादकृत्वा माधवार्चनम्। भुङ्क्ते स याति नरकं सूकरेष्विह जायते॥ अनर्चयित्वा गोविन्दं यैर्भुक्तं धर्मवर्जितैः। शुनो विष्ठासमं चान्नं नीरं च सुरया समम्' इति। 'यो मोहाद-थवालस्यादकृत्वा देवतार्चनम्। भुङ्क्ते स याति नरकान् सूकरेष्वपि जायते' इति योगयाज्ञवल्क्यः। आश्वमेधिके च—'विष्णुं ब्रह्म-ण्यदेवेशं भजध्वं पुरुषोत्तमम्। लोकनाथमनाद्यन्तं जगतः कारणं परम्। नार्चयन्ति हि ये मूढाः परमात्मानमव्ययम्। ते यान्ति नरकान् घोरानक्षय्यान् पुरुषर्षभ॥' इति। भागवते च—गृहं श्मशानं तव बिम्ववर्जितं कथाविहीनाश्च गिरः शिवारुतम्। श्व-सन् शवो दास्यविनाकृतं वपुर्वदन्ति हि त्वय्यनिवेदितं विषम्॥' इति। 'केशवार्चा गृहे यस्य न तिष्ठति महीपते। तस्यान्नं नैव भोक्तव्यमभक्ष्येण समं हि तत्॥' इति स्कान्दे भगवदर्चावतार-रहितगृहस्य पुरुषस्य अभोज्यान्नत्वमुच्यते। एतेन अधिकारिविशे-षचिन्ताया अवकाश एव नेति सिध्यति। 'ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः। अर्चनीयश्च सेव्यश्च नित्ययुक्तैः स्वकर्मसु॥' इत्यविशेषेण हि अधिकारिण उच्यन्ते। तत्र च वर्णादिभेदेन आरा-धनं भिद्यत इति त्वन्यत्। एवं च इदं प्रबुद्धाधिकारिकं वा न

यथा चिन्ता केवलं कृत्वाचिन्तैव, नित्यकर्मसु सर्वेषामधिकारात्। इयांस्तु विशेषः— यदप्रतिबुद्धाः फलार्थिनः प्रवर्तन्ते, प्रबुद्धास्तु प्रपन्नाः स्वानुरूपकैङ्कर्यबुद्ध्येति। एतच्च निक्षेपरक्षायाम् 'ननु प्रपत्त्यैव चेत्सकृत्कृतया अपवर्गो लप्स्यते, किं बहुवित्तव्ययायासमनः-समाधानादिसाध्येन प्रपत्त्यङ्गकेन प्रतिदिवसम् आ प्रयाणादनुवर्तनीयेन भगवदाराधनप्रयोगनिर्बन्धेनेति चेत्, हन्त प्रपन्नाः किमपवर्गार्थं भगवन्तमाराधयन्ति? अपि तु अनन्तगरुडविष्वक्सेनादय इव भगवच्छेषतैकरसाः शास्त्राविरुद्धेन स्वरूपानुरूपेण भगवदाराधनेन कालं क्षिपन्ति' इति श्रीमद्भिराचार्यैः प्रत्यपादि। किं चात्र 'एतच्च नित्यत्वात्स्वरूपानुरूपानन्दफलत्वेन स्वयं प्रयोजनत्वाच्च स्वतन्त्रप्रपत्तिनिष्ठैरपि दुस्त्यजम्' इति, 'अतो यत्र क्वचिद्भगवद्रूपे निरन्तरानुसंधानं नाथमुनिप्रभृतिवत्सिद्धोपायैरपि निवेशनीयम्' इति च श्रीपाञ्चरात्ररक्षासूक्तिरपि भावनीया। श्रीनिवासदीक्षितोऽपि 'क्रियावानेष ब्रह्मविदां वरिष्ठः' इति श्रुतौ क्रियापदेन भगवदर्चनरूपविशेषक्रियैव गृह्यत इति सप्रमाणमास्थाय, भगवदाराधनवन्त एव ब्रह्मविद्वरिष्ठा इति स्वकृते भाष्ये निगमयति। सकलमिदमभिसंधाय कवितार्किकचक्रवर्ती निगमान्तमहादेशिकः,

"परस्मिन्व्यूहाख्ये विभवनिवहेऽर्चावतरणे
तथैवान्तर्यन्तर्यजहदधिकारादिनियमाः।
निरुध्य स्वं चित्तं निरवधिमहानन्दजलधौ
निरस्तान्यापेक्षा नयत सफलं कालमखिलम्॥"

इति सकरुणमस्मानुपदिशतीति सकलमकलङ्कम् ॥

अवतारान्तरेभ्योऽपि हरेरतिशयान्वितः ।
अर्चायां सुलभीभावः सप्रमाणं निरूपितः ॥

सन्निबन्धमवलोक्य जाग्रता
सादरेण समलेखि या कृतिः ।
मन्ददृष्टिरशुभात्र मा स्म भू-
द्भद्रमस्तु गुरुवीक्षणं परम् ॥

इति वात्स्यचक्रवर्ति कृष्णसूरि विरचिते अर्चावतारवैभवे
अर्चासौलभ्यनिरूपणं नाम द्वितीयः परिच्छेदः ॥

——o(*)o——



